श्रीरघुनन्दनभट्टाचार्य्यविरचितं

# दायतत्त्वं

श्रीयुतक्कमिङ्हिसाहेबानुज्ञया

कलिकाताराजधान्यां इण्डुकेशन् मुद्रायन्त्रालये

श्रीलक्ष्मीनारायणशर्म्मणा शोधितं मुद्रितञ्च

॥ सम्वत् १८८५। शकाब्दे १७५०॥

॥ अथ दायतत्त्वस्य सूचीपत्रं ॥

---

इतिदायतत्त्वस्य सूची समाप्ता॥

---

॥ ॐ नमः श्रीकृष्णाय ॥

---

प्रणम्य सच्चिदानन्दं वासुदेवं जगत्पतिं। दायभागस्मृतेस्तत्त्वं वक्ति श्रीरघुनन्दनः॥ निरूप्यन्तेऽत्र संक्षेपाद्दायभागविनिर्णयः। पितृकृतविभागश्च भ्रातृभागक्रियास्तथा॥ अनधिकारिणो भागेष्वऽविभाज्य विभाज्यता। विभक्तसंशयच्छेदो विभागो निह्नुतस्य च॥ स्त्रीधनं तद्विभागार्होऽपुत्रधनाधिकारिणः॥

---

॥ अथ दायभागः॥

तत्र नारदः। विभागोऽर्थस्य पित्र्यस्य पुत्त्रैर्यत्र प्रकल्प्यते। दायभाग इति प्रोक्तं तद्विवादपदं बुधैः॥

अर्थो धनं । पित्र्यः पितृसम्बन्धाल्लब्धः । यत्र विवादपदे । दीयते इतिव्युत्पत्त्या दायशब्दः । तत्र ददातिप्रयोगो गौणः । मृतप्रव्रजितादिस्वत्वनिवृत्ति पूर्व्वकपरस्वत्वोत्पत्तिफलसाम्यात् । नतु मृतादीनां स्वत्वध्वंसफलकेन ममेदमिति संकल्पात्मकस्त्यागस्तत्रास्ति । एवं तद्धने दायपदप्रयोगात्पूर्व्वस्वामिनः स्वत्वापगमोऽवसीयते । तत्रान्येषाञ्च पूर्व्वस्वामिसम्बन्धाधीनं स्वत्वं जायते ॥

सत्स्वङ्गजेषु तद्गामीह्यर्थो भवतीति बौधायन वचनात् ॥

पितृस्वत्वोपरमे पुत्रेषु विद्यमानेषु पुत्रगतं तत्स्वत्वास्पदं धनं भवतीत्यर्थः । यत्तु मिताक्षरायां उत्पत्त्यैवार्थे स्वामित्वं लभेत इत्याचार्य्याः इति गौतमवचनं तदपि पितृस्वत्वोपरमेऽङ्गजत्वहेतुत्वेनोत्पत्तिमात्रसम्बन्धेनान्यसम्बन्धाधिकेन जनकधनेपुत्राणां स्वामित्वाद्धनं पुत्रो लभेत नान्यसम्बन्धीत्याचार्य्या मन्यन्ते । नचपितृस्वत्वे विद्यमानेऽपि जन्मना तद्धनेपुत्रस्वत्वमिति वाच्यं । देवलवचन विरोधात् ॥

तद्यथा। पितर्य्युपरते पुत्राः विभजेयुर्द्धनं पितुः।
अस्वाम्यंहि भवेदेषां निर्द्दोषे पितरि स्थिते। निर्द्दोषे
ऽपतिते। अतएव विभागं प्रक्रम्य नारदः विनष्टेवा
प्यशरणे पितर्य्युपरतस्पृहे। विनष्टे पतिते। अशरणे
गृहस्थाश्रमरहिते। तेन मरणपातित्यगार्हस्थ्ये
तराश्रमगमनः स्वत्वध्वंसे उपरतस्पृहे सत्यपि
स्वत्वे स्वगतधनेच्छारहिते च पुत्राणां विभागाधि
कारः। अत्र पतितानामपि स्वधनसाध्यप्रायश्चित्त
श्रुतेः पातित्वेन स्वत्वनाशः प्रायश्चित्तवैमुख्ये बोध्यः
स्वत्वसमानकालीनेच्छाप्रागभावासमानकालीने
च्छाध्वंसत्वमुपरतस्पृहत्वं। अत्रोपेक्षया स्वत्वे
नाशिते पुत्रादिच्छया नस्वत्वमिति बोध्यं। तस्मात्
देवलवचने पितरि विद्यमाने तद्धने पुत्रानामस्वाम्य
श्रुतेः उत्पत्त्यैवार्थं स्वामित्वाल्लभेत इत्याचार्य्या इति
गौतमवचनं पितृस्वत्वोपरमानन्तरमेवजन्मना
पुत्रस्वत्वसम्पादनात् स्वामित्वेन तद्धने पुत्रोलभेते
त्येतदर्थं। नतु पितृस्वत्वकाले जन्मानन्तरं। नारद
प्रथमवचने पितृपुत्रेतिसम्बन्धिमात्रोपलक्षणं।
दायभागमुपक्रम्य पत्नीदुहितरश्चैव पितरौ भ्रातर

स्तथा । तत्सुतोगोत्रजोबन्धुशिष्यसब्रह्मचारिणः ॥ एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः। स्वर्य्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयम्विधिः॥ इति याज्ञवल्क्योक्तेः। उत्तरोत्तरइतिवीप्साश्रुतेः पूर्व्वस्येत्यत्रापि तथा तेन यत्रद्रव्येयत्स्वामिनः पुत्रत्वादिसम्बन्धाधीनं तत्स्वत्वोपरमे तत्सम्बन्धिनःस्वत्वं तत्र तं प्रति निरूढोदायशब्दः । पुत्रत्वादिसम्बन्धाधीनं नतु क्रयाद्यधीनं स्वत्वोपरमे नतु पतिस्वत्वसमकालीन पत्नीस्वत्वयुक्तेः। तत्र विभागस्तु सम्बन्ध्यन्तरसद्भावेन भूहिरण्यादावुत्पन्नस्य एकदेशगतस्वत्वस्य विनिग मनाभावात् विशेषव्यवहारानर्हस्य गुटिकापाता दिना अमुकस्येदमितिविशेषेण भजनं स्वत्वज्ञापन मितिवदन्ति तन्न समीचीनं । यत्रास्यस्वत्वं तत्रैव गुटिकापातइतिकथं वचनाभावान्निश्चेतव्यः । यत्र वा पितुर्निधनानन्तरं तदीयाश्वयोरेकतरमादाय भ्रात्रा यदर्ज्जितं तत्रार्ज्जकस्य द्वावंशावपरस्यैकः सर्व्वसम्मतः तत्र यदि प्राचीनधनविभागे गुटिका पातादर्ज्जकेन सएवाश्वः पश्चाल्लब्धः तदाप्रादेशिक स्वत्ववादिमते प्रागर्ज्जकस्यैवसोऽश्वइति तेना

र्ज्जितधने कथं भ्रात्रन्तरस्याभागः। यदि चार्ज्जके तरेण सोऽश्वोलब्धः तदा तेनार्ज्जितधनस्य सम भागोयुक्तः। एकस्य स्वायासेन अपरस्याश्वायासेना र्ज्जितत्वात् वस्तुतस्तु पूर्व्वस्वामिस्वत्वोपरमे सम्बन्धा विशेषात् सम्बन्धिनां सर्व्वधनप्रहृतस्वत्वस्य गुटिका पातादिना प्रादेशिकस्वत्वव्यवस्थापनं विभागः। एवं कृत्स्नधनगतस्वत्वोत्पादविनाशावपि कल्प्येते संसृष्टतायां प्रादेशिकस्वत्वनाशकृत्स्नधनगतस्वत्वो त्पादाविव॥

एतच्च विभक्तोयः पुनः पित्रा भ्रात्राचैकत्र संस्थितः। पितृव्येणाथ वा प्रीत्या सतु संसृष्ट उच्यते॥

इति वृहस्पतिवचने येषामेव हि पितृभ्रातृ पितृव्यादीनां पितृपितामहोपार्ज्जितद्रव्येनाविभ क्तत्वमुत्पत्तितः सम्भवति तएव विभक्ताः सन्तः परस्परप्रीत्या पूर्व्वकृतविभागध्वंसेन यत्तव धनं तन्मम धनं तत्तवापि इत्येकस्मिन् कार्य्ये एकगृहि रूपतया स्थिताः संसृष्टाः। नत्वनेवं रूपाणां धन संसर्गमात्रेण संभूयकारिणां वणिजामपि संसर्गि

त्वं नापि विभक्तानां धनसंसर्गमात्रेण प्रीति पूर्व्वकाभिसन्धानं विनाइत्यभिदधता दायभाग कृतापि स्वत्वस्तितं। साधारणत्वादेवहि ॥

बन्धूनामविभक्तानां भोगं नैव प्रदापयेत्। इति कात्यायनवचनं यथाश्रुतं संगच्छते द्रव्यमात्रे स्वत्वस्यापि सम्भवात् अतएवात्र चौर्य्यं न भवतीति वच्यते ॥

एवञ्च साक्षित्वं प्रातिभाव्यञ्च दानग्रहण मेवच। विभक्ताभ्रातरः कुर्य्युर्नाविभक्ताः परस्परं। इतिनारदवचनेनाविभक्तपरस्परदानादिनिषेधो ऽपि न्यायादेव संगच्छते। दानात्पूर्व्वमपि तद्धने प्रतिग्रहीटस्वत्वसम्भवात् दानग्रहणयोरसम्भवः। एवं साक्षित्वप्रातिभाव्ययोर्ज्ञेयं। स्वत्वाविशेषादेवा विभक्तद्रव्येण यत्कृतं तत्र इष्टादृष्टे कर्म्मणि सर्व्वेषां फलभागित्वं ॥

तथाच नारदः। भ्रातृणामविभक्तानामेको धर्म्मः प्रवर्त्तते। विभागे सति धर्म्मोऽपि भवेत्तेषां पृथक् पृथक्। व्यासः स्थावरस्य समस्तस्य गोत्र साधारणस्यच। नैकः कुर्य्यात्क्रयं दानं परस्परमतं

विना । अत्र समस्तस्येति विशेषणेन कृत्स्नधन विषयकमेव प्रत्येकस्वत्वं प्रतीयते । तस्मात्तुल्य सम्बन्ध्यन्तरसत्वे सम्बन्धिसकाशात्संक्रान्तधनं तस्यापि ममापीति सम्बन्धिना प्रतीयते । तद्विमतौ स्वार्थं दानादिकं प्रतिषिद्धं । अतोनत्वेकदेशगत स्वत्वमिति सिद्धं । भागं विशेषयति ॥

वृहस्पतिः । पितृरिक्थहराः पुत्राः सर्व्वएव समांशतः । विद्याधर्म्मयुतस्तेषामधिकं लब्धुमर्हति ॥ विद्याविज्ञानशौर्य्यार्थज्ञानदानक्रियासु च । यस्येह प्रथिता कीर्त्तिः पितरस्तेन पुत्रिणः ॥ कालभेदेनापि विभागमाह ॥

वृहस्पतिः । एकां स्त्रीं कारयेत्कर्म्म यथांशेन गृहे गृहे । अत्र एकस्यापि एकस्यां व्यक्तौ सामयिक नानास्वत्वविनाशकल्पनं स्फुटमिति । सर्व्वेषां सामयिकनानास्वत्वसङ्कोचोवा । देशादिभेदेनापि विभागमाह कल्पतरुरत्नाकरयोः ॥

कात्यायनः । देशस्य जातेः संघस्य धर्म्मोग्रामस्य योभृगुः । उदितः स्यात् सतेनैव दायभागं प्रकल्प येत् । भगुराचेतिमिश्रः ॥

॥ अथ पितृकृतविभागः ॥

हारीतः जीवन्नेव वा प्रविभज्य वनमाश्रयेत् वृद्धाश्रमम्वा गच्छेत् स्वल्पेन वा संविभज्य भूयिष्ठ मादाय वसेत् यद्युपदध्येत् पुनस्तेभ्योगृह्णीया दिति। वृद्धाश्रमः प्रव्रज्या। अनेनस्वल्पस्य विभागो भूयिष्ठद्रव्यग्रहणञ्च पितुरभिहितं॥

विष्णुः। पिता चेत् पुत्रान् विभजेत् तस्यस्वेच्छा स्वयमुपात्तेऽर्थे पैतामहेतु पितापुत्रयोस्तुल्यं स्वामि त्वमिति। स्वार्जितेऽपि स्वेच्छयान्यूनाधिकविभागो भक्तत्ववद्धर्मपानेनाचमत्वादिसत्वासत्वकारणात्॥

यथा कात्यायनः। जीवद्विभागे तु पिता नैकं पुत्रं विशेषयेत्। निर्भाजयेन्न चैवैकमकस्मात्का रणं विना। उक्तकारणशून्ये तु॥

नारदः। व्याधितः कुपितश्चैव विषयासक्तचे तनः। अयथाशास्त्रकारीच न विभागे पिता प्रभुः॥ विषयासक्तत्वं सुभगापुत्रत्वादिना यत्र तु भ्रातर एव विभागमर्थयन्ते तत्र विषमभागाभावमाह॥ मनुः भ्रातॄणामविभक्तानां यद्युत्थानं भवेत्सह। न तत्र भागं विषमं पिता दद्यात् कथञ्चन॥

पैतामहमन्यैर्हृतं पित्रोतं हृतद्क्रामतोन विभज नीयं ॥

यथा मनुविष्णू। पैतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात् । न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्ज्जितं। तत् स्वयमर्ज्जितमिति कृत्वा न विभजेदित्यन्वयः अन्योद्धारे तु वक्ष्यमाणशङ्खवचनाद्व्यवस्था सामान्यविशेषन्यायात् । एतत्तु स्थावरविषयं । मण्यादावनुद्धृतेतु पितुरेव स्वाच्छन्द्यं॥

यथा याज्ञवल्क्यः। मणिमुक्ताप्रवालानां सर्व्वस्यैवं पिता प्रभुः। स्थावरस्य तु सर्वस्य न पिता न पितामहः। पितामहश्रुतेस्तद्धनविषयमिदं। एवञ्च पूर्व्वनष्टाञ्च योभूमिमेकश्चेदुद्धरेत्क्रमात् । यथा भागं भजन्त्यन्ये दत्वांशन्तु तुरीयकमिति शङ्खवचनं भ्रात्राद्युद्धृतविषयं। अत्र स्वयं तुरीयांशं गृहीत्वा भ्रात्रादिभिः सहोद्धर्त्ता गृह्णीयात् अन्यथा विषमहष्टं स्यात्। पितुर्भागकरणे त्वपुत्रपत्न्यै पुत्रतुल्यांशदानमाह ॥

व्यासः। अपुत्रास्य पितुःपत्न्यः समानांशाः प्रकीर्त्तिताः। पितामह्यश्च सर्व्वास्तामातृतुल्याः प्रकीर्त्तिताः। एतच्चादत्ते स्त्रीधने॥

यथा याज्ञवल्क्यः। यदि कुर्य्यात् समानांशान् पत्न्यः कार्य्याः समांशिकाः। न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा। एतद्वचनैकवाक्यतया व्यासवचने पितुः पत्न्य इति नान्वयः। न च वैपरीत्यं स्पष्टस्य तु विधेर्नान्यैरुपसंहार इष्यत इति न्यायात्। तेन पुत्रकृतविभागे विमातुर्नांशिता स्त्रीधने दत्ते त्वर्द्धं पुत्रांशस्य प..नेदेयं॥

अधिविन्नस्त्रि..देयमाधिवेदनिकं समं। न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्ति..मिति विवादे याज्ञवल्क्यदर्शनेन बहूनामेकधर्म्माणामेकस्यापि यदुच्यते। सर्व्वेषामेव तत्कुर्य्यादेकरूपा हि ते स्मृताः॥ इति बौधायनोक्तेन तथा प्रतीतेः पितामहधनस्य पौत्रैर्विभागे पितामह्यौ मातृवद्भागो देय इति पैतामहे तु पितापुत्रयोस्तुल्यं स्वामित्वमिति विष्णूक्तं॥

भूर्य्या पितामहोपात्ता निबन्धो द्रव्यमेव वा। तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः। इति

याज्ञवल्क्योक्तञ्च । निबन्धश्चाकरादौ राजादि दत्तं नियतलभ्यमितिकल्पतरूक्तं द्रष्टव्यं । द्रव्यं द्विपद्रूपं भूसाहचर्य्यात् ॥

तथाच स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्ज्जितं। असम्भूय सुतान् सर्व्वान्नदानं नच विक्रयः॥ इत्येतेषु निबन्धभूमिद्विपदेषु पितामहोपात्तेषु पितुर्यथापार्व्वणपिण्डदातृत्वेन तत्पितृधने स्वत्वंतथा तन्मरणादिना तत् स्वत्वोपरमे तत्पुत्राणां पितृयोग्यांशे सत्यपि पितृव्येंऽशिता । विषयेऽेव व्यक्तमाह रत्नाकरधृतकात्यायनः। अभक्तो मृते पुत्रे तत्सुतं रिक्थभागिनं । कुर्व्वीत जीवनं येन लब्धं नैव पितामहात्॥ लभेतांशं स्वपित्र्यञ्च पितृव्यात्तस्य वा सुतात् । सति तु पितरि पार्व्वणानधिकारात्पुत्राणां नांशिता। एवं धनिनः पौत्रस्वत्वोपरमे तदंश मात्रे प्रपौत्राणामंशिता । सति पौत्रेतु नांशिता इतियद्वा पुत्रेभ्यः स्वधनविभागदाने स्वाच्छन्द्यात् यथा न्यूनाधिकदानं तथात्र नास्तीत्येतत्परं नतु पितापुत्रयोस्तुल्यांशित्वं ॥

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता। समांशहारिणी माता पुत्राणां स्यान्मृते पतौ। इति नारदवचने पितुर्द्व्यंशित्वात्। नचैतत्स्वार्जितपितृद्रव्यपरं। तस्य स्वेच्छास्वयमुपात्तेऽर्थे इतिविष्णूक्तस्वेच्छाया उद्दामरूपायाद्व्यंशनिर्णयानर्हत्वात् भूयिष्ठमादाय वसेदित्यनेन विरोधात् किन्तु नारदवचनं द्वावंशाविति पितामहादिधनपरं॥

पितुः प्रसादाद्भुज्यन्ते वस्त्राण्याभरणानि च स्थावरन्तु न भुज्येत प्रसादे सति पैतृके। इति मिताक्षराधृतवचनमपि पितामहधनपरं। पित्रा च स्वोपार्ज्जितं स्थावरं दत्तं भुज्यत एवेति अन्यथा मूलभूतश्रुत्यन्तरकल्पनापत्तेः निवृत्तरजस्काया मेवमातरि पितामहधनविभागमाह॥

वृहस्पतिः। पित्रोरभावे भ्रातॄणां विभागः सम्प्रदर्शितः। मातुर्निवृत्ते रजसि जीवतोरपि शस्यते॥ अत्र मातृपदं विमातृपरमपि पुत्रान्तरोत्पत्तिसम्भावनातौल्यात्। मातुर्निवृत्ते रजसीति श्रुतेरेतद्वचनं पितामहधनपरं नतु पितृधनपरं तत्र विभक्तजस्य भागदर्शनात्॥

यथाह बृहस्पतिः। पित्रा सह विभक्ता ये सापत्ना वा सहोदराः। जघन्यजाश्च ये तेषां पितृभागहरा स्तु ते॥ अनीशः पूर्व्वजः पित्रे भ्रातृभागे विभक्तजः। विभक्तजोविभागानन्तरं गर्भाधानेन जातः। यथा धने तथर्णेऽपि दानाधानक्रयेषु च। परस्परमनी शास्ते मुक्ता शौचोदकक्रियाः॥

याज्ञवल्क्यः। विभागञ्चेत् पिता कुर्य्यादिच्छया विभजेत्सुतान्। ज्येष्ठंवा श्रेष्ठभागेन सर्व्वे वास्युः समांशिनः॥ अत्रेच्छयेति स्वोपात्तविषयं श्रेष्ठभा गेन विंशोद्धारयुक्तभागेन श्रेष्ठसमभागौ पैतामह धनविषयौ प्रागुक्तवचनसामञ्जस्यात्॥

एवं चोर्द्धं पितुः पुत्रारिक्थं विभजेयुर्निवृत्ते रजसि मातुर्जीवतिचेच्छति इतिगौतमवचनस्य मातृरजसोनिवृत्युक्तेः पैतामहधनगोचरत्वं तत श्चोर्द्धं पितुरिति पितुर्मरणप्रतीतेर्जीवतिचेच्छती त्यत्रापि पितुरेवेच्छाप्रतीयते। तेन पितामहधने पितुरिच्छया विभागोन पुत्रस्येति सिद्धं॥ एवञ्च अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते। इति देवलवचनं पितुरनुमत्या विभागविषयकमिति

बौधायनवचनञ्च पितृधनवत् पैतामहधनपर मप्यविशेषात्। यदितु निवृत्तरजस्कायां मातर्य्यपि दैवात् पितामहधनं विभक्तं ॥

तच्च विष्णुः। पितृविभक्ताविभागानन्तरोत्पन्नस्य विभागं दद्युरिति ॥ नेदं पितृधनपरं । प्रागुक्त वृहस्पतिवचनविरोधात् द्वादशविधान् पुत्रानुद्दिश्यदेवलः ॥

सर्व्वे ह्यनौरसस्यैते पुत्रादायहराः स्मृताः । औरसे पुनरुत्पन्ने तेषु ज्यैष्ठं न विद्यते॥ तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिन ः। हीनास्तमुपजीवेयु र्ग्रासाच्छादनसंवृताः । दायहराः पूर्णांशहराः। तेषामौरसव्यतिरिक्तानां मध्ये ये पितुः सवर्णास्ते सत्यौरसे तृतीयांशहराः॥

अत्रापि विशेषमाह मनुः। औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ। दशापरे च क्रमशोगोत्ररिक्थांशभागिनः। सन्ततिकारकत्वेन धनिदेयपिण्ड दातृत्वेनच प्रथमं पुत्रिकापुत्रस्य तदनन्तरं दत्तकस्य गोत्ररिक्थयोर्भागित्वं । क्रमशः पूर्व्वपूर्व्वाभावे परःपरः इत्थं क्रमेण गोत्रधनयोर्भागिनः॥ शूद्रस्य दासीपुत्रविभागमाह॥

याज्ञवल्क्यः जातोऽपिदास्यां शूद्रेण कामतो ऽंशहरोभवेत्। मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्ध भागिनं। अभ्रातृकोहरेत्सर्व्वं दुहितॄणांसुतादृते। कामतःपितु रिच्छातः। अंशहरः पुत्रान्तरतुल्यांशहरः। सतितु दौहित्रे तस्यैव स्वीयसन्तानत्वात्। दासीपुत्रस्यापरिणीताजातत्वात्। तयोस्तुल्यांशित्वं युक्तमिति। अनियोगोत्पन्नक्षेत्रजस्यौरसेन सह विभागमाह मनुः। यद्येकरिक्थिनौ स्यातामौरस क्षेत्रजौ सुतौ। यद्यस्य पैतृकं रिक्थं सतद्गृह्णीत नेतरः। एकरिक्थिनौ एकस्यां जातौ रिक्थिनौ। यस्य वीजाद्योजातः स तस्य रिक्थं गृह्णीयात्। इतरोऽन्यवीजजोन गृह्णीयादित्यर्थः। स्त्रीधने यत्पितृदत्तं यद्धनं स्त्रीयै तद्वीजजस्तद्धनं गृह्णीयात् नान्यइत्याह नारदः। द्वौ सुतौ विवदेयातां द्वाभ्यां जातौ स्त्रियाधने। तयोर्यद्यस्य पित्र्यं स्यात् सतद्गृह्णीत नेतरः॥

॥ अथोपरते पितरि भ्रातॄणां विभागः॥

तत्र देवलः। पितर्य्युपरते पुत्राविभजेयुर्द्धनंपितुः। पितुः सकाशादागतधनमित्यर्थः॥

नारदः। यच्छिष्टं पितृदायेभ्यो दत्वर्णं पैतृकं ततः। भ्रातृभिस्तद्विभक्तव्यमृणी नस्याद्यथा पिता। पितृदायेभ्यः पित्रादत्तप्रतिश्रुतेभ्यः। ऋणी न स्यादित्यनेनाशक्तौ शोधनीयमित्युत्तमर्णस्थाने स्वीकर्त्तव्यं। अत्र मातरि जीवन्त्यां सोदराणां विभागो न धर्म्यः॥

यथा शङ्खलिखितौ। ऋक्थमूलं हि कुटुम्बमस्वतन्त्राः पितृमन्तोमातुरप्येवमस्थितायाः इति॥

अतएव व्यासः। भ्रातॄणां जीवतोः पित्रोः सहवासोविधीयते। तदभावे विभक्तानां धर्म्मस्तेषां विवर्द्धते॥ विभक्तानां स्वमात्रधने वैदिककर्म्मकरणात्तन्मात्रधर्म्मत्वेन तद्वृद्धिरित्यर्थः। यदि तु विभज्यते तदामातुर्भागमाह॥

कात्यायनः। मातापि पितरि प्रेते पुत्रतुल्यांशहारिणी। समांशता तु मातुरप्राप्तस्त्रीधनायाः। प्राप्तस्त्रीधनायास्तु भागार्द्धं प्रागुक्तवचनात्। सोद्धारानुद्धाराभ्यां द्विप्रकारविभागमाह॥

बृहस्पतिः। द्विप्रकारोविभागस्तु दायादानां प्रकीर्त्तितः। वयोज्येष्ठक्रमेणैकः समापरांशकल्पना॥

वयोज्यैष्ठक्रमेणेत्युद्धाराभिप्रायेण। शूद्रे तूद्धाराभावो वक्ष्यते। समभागस्य शास्त्रीयत्वेऽप्युद्धारपक्षोभक्त्यति शयादविरुद्धः। विभागाविभागविकल्पवत्॥

यथा मनुः। ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः। शेषास्तमुपजीवेयुर्यथैव पितरं तथा॥

नारदः। बिभृयाद्वेच्छतः सर्व्वान् ज्येष्ठोभ्राता यथा पिता। भ्राता शक्तः कनिष्ठोवा शक्त्यपेक्षा कुले स्थितिः॥ मध्यमोऽत्र दण्डापूपन्यायात्सिद्धः। सच न्यायोयथा मूषिकस्य दण्डभक्षणं दुष्करं तन्निष्पत्तौ तत्सहचरितापूपभक्षणमितिसुकरत्वात् यथा सम्भाव्यते तथात्रापि सहचरितैकसिद्धावपरसिद्धेरौचित्यात् तत्सम्भाव्यते॥

अतएवाविशेषान्नारदः। कुटुम्बार्थेषु चोद्युक्तस्तत्कार्य्यं कुरुते तु यः। सभ्रातृभिर्बृहणीयोग्रासाच्छादनवाहनैः॥

एवम्भूतं प्रशंसति व्यासः। जीविते यस्य जीवन्ति विप्रामित्राणि बान्धवाः। सफलं जीवितं तस्य आत्मार्थे कोन जीवति। हरिवंशे वैपरीत्याद्दोषमाह इन्द्रं प्रति नारदः। अन्योन्यभेदोभ्रातॄणां

सुहृदां वा बलान्तक। भवत्यानन्दह्वदेव द्विपतां नात्र संशयः। अत्र सर्व्वैच्छया नारदेन सह्वास उक्तः। विभागस्तु न तथा॥

यथा विभागं प्रक्रम्य कात्यायनः। अप्राप्तव्यवहाराणां धनं व्ययविवर्जितं। न्यसेयुर्बन्धुमित्रेषु प्रोषितानां तथैवच। अप्राप्तव्यवहाराणां बालानां यस्तु स्वयोग्यतया पित्रादिधने निस्पृहः स तण्डुलप्रस्थादि दत्वा तत्पुत्रादेर्द्दुरन्ततानिरासाय विभजनीयः॥

यथामनुः। भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्म्मणा। स निर्भाज्यः स्वकादंशात्किञ्चिद्दत्त्वोपजीवनं॥

कात्यायनः। दृश्यमानं विभज्येत गृहक्षेत्रचतुष्पदं। गूढद्रव्याभिशङ्कायां प्रत्ययस्तत्र कीर्त्तितः॥ प्रत्ययोदिव्यं। एतदेव स्पष्टयति॥

गृहोपस्करवाह्यास्तु दोह्याभरणकर्म्मिणः। दृश्यमानाविभज्यन्ते कोषं गूढेऽब्रवीद्भृगुः॥ गृहोपस्करः। उदूखलादि कर्म्मिणोदासादयः कोषोदिव्यविशेषः। स तु दिव्यतत्त्वेऽनुसन्धेयः। प्रसिद्धमन्यत्॥

नारदः। येषान्तु न कृताः पित्रा संस्कारविधयः क्रमात्। कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात्। अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः। अवश्यकार्य्याः संस्काराः भ्रातृभिः पूर्व्वसंस्कृतैः॥

कन्याभ्यस्तु विवाहोचितद्रव्यदानमाह॥

देवलः। कन्याभ्यश्च पितृद्रव्याद्देयं वैवाहिकं वसु। अपुत्रकस्य कन्या स्वा धर्म्मजा पुत्रवद्धरेत्॥

विष्णुः। अनूढानान्तु कन्यानां स्ववृत्तानुसारेण संस्कारं कुर्य्यात्। एवं तुरीयांशदानप्रतिपादकमपि विवाहोचितद्रव्यदानपरं। पितृव्यातिरिक्तानामपि संस्कर्तृत्वमाह द्वैतनिर्णयामृतधृतस्मृतिः। अष्टौ संस्कारकर्म्माणि गर्भाधानमिव स्वयं। पिता कुर्य्यात्तदन्यो वा तस्याभावे तु तत्क्रमात्॥

---

॥ अथ विभागानधिकारिणः॥

आपस्तम्बः। सर्व्वे हि धर्म्मयुक्ता भागिनो द्रव्यमर्हन्ति। यस्त्वधर्म्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोपि तमभागं कुर्व्वीतेति ज्येष्ठोऽपि पुत्र इति शेषः॥

तथाच वृहस्पतिः । सवर्णाजोप्यऽगुणवान् नार्ह्यः स्यात् पैतृके धने । तत्पिण्डदाः श्रोत्रियाये तेषान्त दभिधीयते ॥ तत्पिण्डदाः धनिपिण्डदाः अतएव श्रोत्रियादित्युक्तं अगुणवान् गुणविरुद्धदोषवान् अगुणवद्ग्रासाच्छादनदातारइति रत्नाकरः एत न्मतेऽपि सुतरां धनिपिण्डदातृत्वं प्रतीयते ॥

यथाजलं कुप्लवेन तरन्मज्जति मानवः । तथा पिता कुपुत्रेण तमस्यन्धे निमज्जति ॥

कात्यायनः । यज्ञार्थं द्रव्यमुत्पन्नं तस्मात् द्रव्यं नियोजयेत् । स्थानेषु द्रव्ययोग्येषु न स्त्रीमूर्ख विधर्म्मिषु ॥ स्त्रीति पत्न्यादिविशेषविहितेतरसपिण्ड स्त्रीपरं तथा शास्त्रशौर्य्यादिरहितस्तपोदानविव र्ज्जितः । आचारहीनः पुत्रस्तु मूत्रोच्चारसमस्तु सः ॥

शङ्खः । अकृत्वा प्रेतकार्य्याणि प्रेतस्य धन हारकः । वर्णानां यद्वधे प्रोक्तं तद्व्रतं नियतश्चरेत् ॥

देवलः । मृते पितरि न क्लीवकुष्ठ्युन्मत्तजडा न्धकाः । पतितः पतितापत्यं लिङ्गी दायांशभागिनः ॥ तेषां पतितवर्ज्जेभ्योभक्तवस्त्रं प्रदीयते । तत्सुताः पितृदायांशं लभेरन् दोषवर्ज्जिताः । जडोधर्म्म

ह्याल्ये निरुत्साहः अन्धोजन्मान्धः जात्यन्धबधिरौ तथेति मनुवचनात् लिङ्गी कपटव्रतधारी ॥

नारदः । पितृद्विट्पतितः षण्डोयश्च स्यादौपपातिकः । औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः । पितृद्विट् पितरि जीवति तत्ताडनादिकृत् मृते तु तत्श्राद्धादिविमुखः । औपपातिकः उपपातकैः संसृष्टः कल्पतरुकृता तु औपपातिकइत्यत्रा पपात्रितइति पठित्वा राजवधादिदोषेण बान्धवैर्यस्य घटापवर्ज्जनं कृतमितिविवृतं । प्रकाशकारेण उपपातकीतिपठित्वा उपपातकैर्युक्तइति विवृतं ॥

---

## ॥ अथ विभाज्याविभज्ये ॥

तत्र व्यासः । अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनं । दायादेभ्योन तद्दद्यात् विद्यालब्धञ्च यद्भवेत् ॥

विद्याधनमाह कात्यायनः । उपन्यस्ते तु यल्लब्धं विद्ययापणपूर्व्वकं । विद्याधनन्तुतद्विद्यात् विभागेन नियोजयेत् ॥ शिष्यादार्त्विज्यतः प्रश्नात्सन्दिग्ध प्रश्ननिर्णयात् । स्वज्ञानसंशनाद्वादाल्लब्धं प्राध्ययनात्तु

यत्। विद्याधनन्तु तस्याऽऽस्य विभागे न प्रयोजयेत्। शिल्पेष्वपि हि धर्म्मोऽयंमूल्याद्यच्चाधिकं भवेत्॥ परं निरस्य यल्लब्धं विद्यया द्यूतपूर्व्वकं। विद्याधनन्तु तद्विद्यात् न विभाज्यं वृहस्पतिः॥ यदि भवान् भद्र मुपन्यस्यति तदा भवतएव मयैतद्देयमिति पणितं यत्रोपन्यासं निस्तीर्य्य लभते तन्न विभाज्यं शिष्यादध्यापितात् आर्त्विज्यतः यजमानाद्दक्षिणया लब्ध धनं न प्रतिग्रहलब्धं वेतनरूपत्वात्तस्य तथा यत्किञ्चिद्विद्याप्रश्ने निस्तीर्णेऽपणितं यदि कश्चित् परितोषाद्ददाति तथा योऽस्मिन् शास्त्रार्थे अस्माकं संशयमपनयति तस्मै धनमिदं ददानीत्युपस्थितस्य संशयमपनीय यल्लब्धं वादिनोर्व्वा सन्देहे न्यायकरणार्थमागतयोः सम्यङ्निरूपणेन यल्लब्धं षष्ठांशादिकं तथा शास्त्रादिप्रकृष्टज्ञानं सम्भाव्य यत् प्रतिग्रहादिना लब्धं तथा शास्त्रज्ञानविवादे अन्यत्रापि यत्र कुत्रचिदन्योन्यज्ञानविवादे निर्ज्जित्य यल्लब्धं। तथैकस्मिन् देये वहूनामुपप्लवे येन प्रहृष्टात् यल्लब्धं। तथा शिल्पादिविद्यया चित्रकारसुवर्णकारादिभिर्यल्लब्धं। तथाद्यूतेनापि परं निर्ज्जित्य

यल्लब्धं तत्सर्व्वमविभाज्यमितरैः तस्माद्यया कयाचि द्विद्यया लब्धमर्जकस्यैव तन्नेतरेषामिति। प्रदर्शनार्थन्तु कात्यायनेन विस्तारितमिति दायभागः॥

नारदः। कुटुम्बं विभृयाद्भ्रातुर्य्यो विद्यामधिगच्छतः। भागं विद्याधनात्तस्मात्सलभेताश्रुतोऽपि सन्॥ विभृयादित्येकवचननिर्द्देशान्न बहवः यदि विद्यामभ्यस्यतोभ्रातुः कुटुम्बमपरोभ्राता स्वधनव्ययशरीरायासाभ्यां सम्वर्द्धयति तदा तद्विद्यार्ज्जितधने तस्याधिकारः। अश्रुतोमूर्खः॥ कल्पतरुमिताक्षरादीपकलिकासु॥

कात्यायनः। परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या। तया लब्धं धनं यत्तु विद्यालब्धं तदुच्यते॥ अन्यतः पितृमातृकुलव्यतिरिक्तात् अत्र विशेषयति सएव नाविद्यानान्तु वैद्येन देयं विद्याधनात्कचित्। समविद्याधिकानान्तु देयं वैद्येन तद्धनं॥ तत्रोच्चरितविद्यापदमुभाभ्यां सम्बध्यते तेन समविद्याधिकविद्यानां भागोन तु न्यूनविद्याविद्ययोः वैद्येन विदुषा पुनर्विशेषयति॥ कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा शौर्य्यप्राप्तन्तु यद्वित्तं

विभाज्यं तद्बृहस्पतिः । कुले स्वकुले पितामहपितृ व्यादिभ्यः पितृत एव वा शिक्षितविद्यानां भ्रातॄणां यद्विद्याशौर्य्यप्राप्तं धनं तद्विभजनीयमिति कल्पतरु रत्नाकरौ ॥

पुनः कात्यायनः । द्व्यंशहरोऽर्द्धहरोवा पुत्र वित्तार्ज्जनात्पिता । पुत्रवित्तार्ज्जनात् । छिदभिद्वि तोभागोङ्गव्यवत् प्रकाशतइति न्यायात् पुत्रार्ज्जित वित्तात् पितुर्द्व्यंशित्वं पितृधनानुपघातविषयं भ्रातृधनोपघातविषयञ्च । अर्जकस्य तु द्व्यंशित्वं भ्रातृधनोपघाते तु तेषामप्येकांशित्वं वक्ष्यमाणा द्व्यासवचनात् पितुरर्द्धहरत्वन्तु पितृद्रव्योपघाता दगुणवत्त्वे इति दायभागः । अनुपघाते पिता द्व्यंश हरः अर्जकत्वात् । स्वयमपि द्व्यंशहरः इतरेषाम नंशित्वं भ्रातृद्रव्योपघाते तु तस्याप्येकांशइति द्व्यंशार्द्धांशयोर्भेदकथनं ॥

पुनः कात्यायनः । गोप्रचारश्च रथ्या च वस्त्रं यच्चाङ्गयोजितं । प्रयोज्यं न विभज्येत शिल्पार्थन्तु बृहस्पतिः प्रायोज्यं यद्यस्य प्रयोजनार्हं पुस्तकादि तन्मूर्खादिभिः सह पण्डितादिभिर्विभजनीयं एव मेव दायभागमदनपारिजातादयः ॥

याज्ञवल्क्यः । पितृभ्याञ्चैव यद्दत्तं तत्तस्यैव धनं भवेत् । पुत्रदुहित्रोर्यदलङ्कारादि दत्तं तत्त स्यैवेति शूलपाण्युपाध्यायाः ॥

नारदः । शौर्य्यभार्य्याधने चोभे यच्चविद्याधनम्भ वेत् । त्रीण्येतान्यविभाज्यानि प्रसादो यश्चपैतृकः ॥ प्राप्तञ्च सहभार्य्ययेति भरद्वाजवचनात् भार्य्याप्राप्ति काले लब्धं धनं भार्य्याधनमौद्वाहिकमित्यर्थः चोभे इत्यत्र हित्वेति, पाठे एतत्त्रिकं हित्वान्यद्विभजेदित्य नुवर्त्तते अतएतान्यविभाज्यानीति । प्रसाददत्तस्य पौर्व्वापर्य्ये पूर्व्वसंप्रदानस्यैव तद्द्रव्यं ॥

सर्व्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया । आधौ प्रतिग्रहे क्रीते पूर्व्वातु बलवत्तरेति याज्ञवल्क्यवच नात् । अत्र या बलवती सैव सिद्ध्यतीत्यर्थः तत्राप्या धिक्रिया स्वामिनोयथेष्टविनियोगविरोधिका नतु स्वत्वध्वंसजनिकेति सा पूर्व्वापरा वा प्रतिग्रहरूप क्रियाभ्यां पूर्व्वस्वामिस्वत्वध्वंसोत्तरजाताभ्यां बल वतीभ्यां साध्यते अतएव रत्नाकरादिधृतस्मृतिः ॥ न्यासं कृत्वापरत्राधिं कृत्वा वाधिं करोति यः विक्र यस्या क्रिया तत्र पश्चिमा बलवत्तरा । न्यासं कृत्वा

धिं करोति आधिं कृत्वा वा विक्रयं करोति विक्रय पदं स्वत्वध्वंसकत्वात् दानं लक्षयति नच पराक्रिया सिद्धेत्यर्थः। एवञ्च विक्रेतृदात्रोर्मरणादिना आध्युद्धारे विक्रयदानाभ्यां तत्कर्तृस्वत्वजननात्तत्क्रेतृप्रतिगृहीतृभ्यामाध्युद्धारः कार्य्यइति नत्वेवागमविवादे ताभ्यान्तयोर्भोगएव व्यवस्थापनीयोनागमादेरिति॥

शङ्खलिखितौ नवास्तुविभागोनोदकपात्रालङ्कारोपयुक्तस्त्रीवाससामपां प्रचाररथ्यानां विभागश्चेति प्रजापतिरिति यस्मिन् वास्तुनि येन कूपोद्यानादिकं कृतमपरेणापि स्थानान्तरे तथाकृतञ्चेत्तदा येन यत्कृतं तत्तस्यैव अन्यथाप्येवं साधारणधनार्ज्जितेऽपि विशेषमाह॥

व्यासः। साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधं। शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः॥ तस्य भागद्वयं देयं शेषास्तु समभागिनः। अत्र भ्रातरइत्युपलक्षणं पितृव्यादयोपि बोद्धव्याः तस्मार्ज्जकस्य साधारणोपघाते यस्य यावतोऽंशस्योपघातस्तस्य तदनुसारेण भागकल्पना

कार्य्येतिदायभागः । नच स्थावरस्य समस्तस्य गोत्रसाधारणस्यच । नैकःकुर्य्यात्क्रयं दानं परस्पर मतं विना ॥ विभक्ता अविभक्तावा सपिण्डाःस्थावरे समाः । एकोह्यनीशः सर्व्वत्र दानाधमनविक्रये ॥ इतिव्यासवचनाभ्यामेकस्य दानवन्धकविक्रयाधि कारइतिवाच्यं । यथेष्टविनियोगार्हत्वरूपस्य स्वत्वस्य द्रव्यान्तरइवात्राप्यविशेषात् वचनञ्च स्वामित्वेन दुर्व्वृत्तपुरुषगोचरविक्रय्यादिना कुटुम्ब विरोधादधर्मज्ञापनार्थं निषेधः न तु विक्रयाद्य निस्वत्वर्थमिति दायभागः विभक्तानामपि यत्रांश विच्छेदेन जातस्तन्मध्यगतएवावतिष्ठते तेन तत्र साधारणत्वमेव तत्रैकोऽनीशः पृथग्भूतेषु स्वस्व क्रतस्य सिद्धिरेवेति विवादचिन्तामणिः । यत्तु तत्तु विभक्तेष्वनुज्ञाग्रहणं विभक्ताविभक्तसीमादिसंश यव्युदासाय ग्रामसामन्ताद्यनुमतिग्रहणवत्तदुक्तं मिताक्षरायां । स्वग्रामज्ञातिसामन्तदायादानुमते नच । हिरण्योदकदानेन षड्भिर्गच्छति मेदिनीति ॥ दायादा दौहित्रादयः । ज्ञातेः पृथगुपादानात् हिरण्योदकदानेनेति । स्थावरे विक्रयोनास्ति कुर्य्या

दाधिमनुज्ञयादिति स्थावरस्य केवलविक्रयप्रतिषेधात् एवं भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति। तावुभौ पुण्यकर्म्माणौ नियतं स्वर्गगामिनौ ॥ इति दानप्रशंसादर्शनाच्च विक्रयेपि कर्त्तव्ये सहिरण्यमुदकं दत्वा दानरूपेण स्थावरविक्रय इति विज्ञानेश्वरः वस्तुतस्तु स्थावरविक्रयनिषेधोऽविभक्तस्थावरविषयः। तत्रापि यदि विक्रयं विनाऽवस्थितिर्न भवति तदा विक्रये कर्त्तव्ये दायादानां दुरन्ततानिवृत्यर्थं क्रेतुरि स्वीणादानमप्युक्तं अतएव कात्यायनेन यच्चोपकारिणे ददाति इति यत् दानोपसर्जनमुक्तं तद्व्यसनोपकारिपरं तदितरोपकारिणे दाने फलमाह दक्षः मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणे। दीनानाथविशिष्टेभ्यो दत्तन्तु सफलं भवेत् ॥

अतएव नारदः। स्वभागान् यदि ते दद्युर्व्विक्रीणीयुरथापिवा। कुर्य्युर्यथेष्टं तत्सर्व्वमीशास्ते स्वधनस्य वै ॥

अतएव याज्ञवल्क्यः। क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः। दायादेभ्योन तद्दद्यात् विद्यया

लब्धमेवच । पितृपितामहागतं बलादन्यैर्हृतं योऽंश्यन्तरानामनुज्ञयाउद्धरति तदंश्यन्तरेभ्योन दद्यात्। भूमौ तु विशेषयति ॥

शङ्खः। पूर्व्वनष्टाञ्च योभूमिमेकएवोद्धरेत्क्रमात्। यथाभागं भजन्त्यन्ये दत्वांशन्तु तुरीयकं॥ एतद्वचनं स्मृतिमहार्णवकामधेनुपारिजातप्रभृतिष्वलिखनाद् युक्तमेवेतिरत्नाकरः। नन्व दायभागमिताक्षरा प्रभृतिधृतत्वात् पूर्व्वपुरुषार्ज्जितनष्टोद्धारे विशेष यति मिताक्षरायां॥

स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्ज्जितं। अस म्भूय सुतान् सर्व्वान्नदानं नच विक्रयः॥ ये जाताये ऽप्यजातावा ये च गर्भेव्यवस्थिताः। वृत्तिन्तेपिहि काङ्क्षन्ति वृत्तिलोपोविगर्हितः ॥ अस्याप्यपवाद माह ॥

एकोपिस्थावरे कुर्य्याद्दानाधमनविक्रयं। आपत्काले कुटुम्बार्थे धर्म्मार्थे च विशेषतः॥ आध मनं बन्धकत्वेन ख्यातं। कुटुम्बार्थेदासक्रतस्यापि सिद्धिमाह॥

मनुः । कुटुम्बार्थेऽध्यधीनोपि व्यवहारं यमाचरेत् । स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत् ॥ तद्देशस्थे देशान्तरस्थेवा स्वामिनि कुटुम्बव्यवहारनिमित्तं दासोपि यदृणादिकं कुर्य्यात् तत्स्वाम्यनुमन्येतेति कुल्लूकभट्टः ॥

व्यक्तमाह वृहस्पतिः । पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः । यद्गृहीतं कुटुम्बार्थे तद्गृही दातु मर्हति ॥

मनुः । गृहीता यदि नष्टः स्यात्कुटुम्बार्थे कृतव्ययः दातव्यं बान्धवैस्तत्स्यात् प्रविभक्तैरपि स्वतः स्वधनात् ॥

कात्यायनः । कुटुम्बार्थमशक्तेतु गृहीतं व्याधितेऽथवा । उपप्लवनिमित्तन्तु विद्यादापत्कृतन्तु तत् ॥ कन्यावैवाहिकञ्चैव प्रेतकार्य्येच यत्कृतं । एतत्सर्व्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः । कुटुम्बमवश्यं भरणीयं । प्रभोरिति कर्त्तरि षष्ठी तेन प्रभुना दातव्यमिति रत्नाकरः ॥

दायभागे हारीतः जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेषु न स्वातन्त्र्यं कामं दीने प्रोषिते आर्त्तिं गतेवा ज्येष्ठोऽर्थांश्चिन्तयेत् ॥

सुव्यक्तामाहतुः शङ्खलिखितौ । पितर्य्यशक्ते कुटुम्बव्यवहारान् ज्येष्ठः प्रतिकुर्य्यादनन्तरोवा कार्य्यज्ञस्तदनुमतोनत्वकामे पितरि रिक्थविभागो वृद्धेविपरीतचेतसि दीर्घरोगिणि वा ज्येष्ठएव पितृवदर्थान्पालयेत् इतरेषाम्तन्मूलं हि कुटुम्बमस्वतन्त्राः पितृमन्तोमातुरप्येवमवस्थितायाः । एतद्वचनद्वयं कार्य्याक्षमे दीर्घरोगिणि च पितरि विभागं निषिद्धैव ज्येष्ठोगृहं चिन्तयेत् तदनुजोवा कार्य्यज्ञइत्याह अनुमतिस्त्वप्रतिषेधादपि भवति ॥

स्वंद्रव्यं दीयमानञ्च यःस्वामी ननिवारयेत् । ऋत्विग्भिर्व्वापरैर्व्वापि दत्तं तेनैव तद्गुरिरिति प्रायश्चित्तविवेकधृतकात्यायनवचनात् अतएव परमतमऽप्रतिसिद्धमनुमतं भवतीति न्यायविदः । एवं दत्तानिवारणत्वात् सिद्धिरिति ॥

---

॥ अथ वृत्तविभागसन्देहनिर्णयः ।

शङ्खः । गोत्रभागविभागार्थे सन्देहे समुपस्थिते । गोत्रजैस्त्वापरिज्ञाते कुलं साक्षित्वमर्हति ॥ गोत्रभागविभागार्थे सन्देहइति गोत्रलब्धविभजनीय

विभजनविषयके वृत्तविभागवैपरीत्यसन्देहे विभागकरणसन्देहे चकुलं बन्धुः एषामभावएवान्यः साक्षी तल्लेख्यमाह ॥

बृहस्पतिः। भ्रातरःसंविभक्ताये स्वरुच्यातु परस्परं। विभागपत्रं कुर्व्वन्ति भागलेख्यं तदुच्यते॥ व्यवहारमातृकायां बृहस्पतिः। यद्येकशासने ग्रामक्षेत्रारामाश्च लेखिताः। एकदेशोपभोगेपि सर्व्वे भुक्ता भवन्ति ते॥ शासनं पत्रादि तदेकदेशस्यानुपभोगे तु सर्व्वस्य भोगाभावेहानि र्यथासएव ॥

संविभागक्रयप्राप्तं पित्र्यं लब्धञ्चराजतः। स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया॥ प्राप्तमात्रं भुक्तं स्वीकृत्याप्रतिपन्थितं । तस्य तत्सिद्धिमाप्नोति हानिस्त्वोपेक्षया तथा॥ सम्विभागक्रयादिलब्धस्यैव सति भोगे सिद्धिः तद्भोगोपेक्षया हानिरिति ॥

नारदः। दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः। विभक्तानां पृथग्ज्ञेयाः पाकधर्म्मागमव्ययाः ॥ साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेवच। विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताःपरस्परं॥ येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वरक्थतः । विभक्तानवगच्छेयु र्लेख्यमप्यन्तरेण तान्॥

अतएव याज्ञवल्क्यः। भ्रातॄणामथ दम्पत्योः पितुः पुत्त्रस्य चैव हि। प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तत्स्मृतं॥ परस्परमिति शेषः यद्यपि जायापत्योर्विभागो न विद्यते तथा पुण्यापुण्यफलेषु चेत्यापस्तम्बोक्तेर्विभागाभावः। पत्यधिकरणेऽपि जीवत्पतिधनमात्रे स्वत्वं युक्तञ्च। दम्पत्योर्मध्यगं धनमित्युक्तं इति श्राद्धविवेकः। मध्यगमुभयस्वामिकमित्यर्थः। तथापि यदि कुर्य्यात् समानांशाः पत्न्यः कार्य्याः समांशिका इति याज्ञवल्क्येन पुत्त्रैर्विभागकरणे प्रवृत्तस्याऽपुत्त्रपत्न्या अपि विभागावगतेस्तदभिप्रायेण दम्पत्योरित्युक्तं। यत्तु भार्य्यापुत्त्रश्च दासश्च त्रय एवाधनाः स्मृताः। इत्यत्राधनत्वश्रुतेरापस्तम्बीयाविभागाभिधानं वैदिककर्म्ममात्रे सहकारित्वेनाधिकारार्थमिति। तन्न तद्वचनोत्तरार्द्धे यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमित्यनेन स्वार्जितस्यैव पत्न्यादीनां पत्न्याद्यनुमतिमन्तरेणास्वातन्त्र्यप्रतिपादनात्। आपस्तम्ववचने तथापुण्यापुण्यफलेषु चेति पृथगुपादानाच्च तस्माद्विभागो न विद्यत इति निषेधस्य प्रवृत्तिपूर्व्वकत्वादेकस्मिन् धने उभयोः

स्वत्वं ज्ञाप्यते। अन्यथोभयोः स्वत्वाभावेन विभाग प्रसक्त्यनुपपत्तेर्निषेधविधिर्न स्यात् ॥

एकत्वं सागता यस्माच्चरुमन्त्राहुतिव्रतैरिति लघु हारीतोक्तैकत्वस्यैतदपिफलं ॥

---

॥ अथ चिरप्रोषितागतस्य वंशस्य विभागः ॥

तत्र वृहस्पतिः। गोत्रसाधारणं त्यक्त्वा योन्यदेशं समाश्रितः। तद्वंशस्यागतस्यांशः प्रदातव्योन संशयः ॥ तृतीयः पञ्चमश्चैव सप्तमोवापि यो भवेत्। जन्मनामपरिज्ञाने लभेतांशं क्रमागतं ॥ यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः। तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ॥ भुक्तिस्त्रैपुरुषीसिद्धे दपरेषां नसंशयः। अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥ अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकं। सुहृद्बन्धुसकुल्यस्य नतद्भोगेन हीयते ॥ विवाह्यश्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैवच। सुदीर्घेणापि कालेन तेषां सिद्ध्यति तत्तुन ॥ गोत्रसाधारणं द्रव्यमितिशेषः आपणः पण्यवीथिका। अपरेषां गोत्रजादपरेषां विवाह्योजामाता इतिव्यवहारचिन्तामणिः ॥

नारदः। अन्यायेनापि यद्भुक्तं पित्रा पूर्व्वतनै स्त्रिभिः। न तच्छक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतं॥ पित्रा पूर्व्वतनैरित्यत्र पित्रा सह पितरमादाय त्रिभि श्चतुर्थः समवाप्नुयादिति वचनार्थः। भोगं विशिनष्टि व्यासः पिता पितामहोयस्य जीवेच्च प्रपितामहः। त्रयाणां जीवतां भोगोविज्ञेयस्त्वेकपूरुषः॥ युग पद्भोगे षष्टिवर्षेपि न त्रैपुरुषिकः प्रपितामहस्य तत्र स्वातन्त्र्यात् तस्यैव भोगः तदाकोऽन्यभुक्ताविल्याह विज्ञेयस्त्वेकपूरुषइति॥

त्रिपुरुषं विशेषयति व्यासः। प्रपितामहेन यद्भुक्तं तत्पुत्रेण विनाच तं तौ विना यस्य पित्रा च तस्य भोगस्त्रिपौरुषः॥ कियन्तं कालमेकैकस्य भोगइत्य पेक्षायां व्यासः। वर्षाणि विंशतिं भुक्त्वा स्वामिना व्याहता सती। भुक्तिः सा पौरुषी भूमेर्द्विगुणाच द्विपौरुषी॥ त्रिपौरुषी च त्रिगुणा नतत्राऽन्वेष्य आगमः॥ अत्राव्याहतेति प्रतिवादिसमक्षं लभ्यते षष्टिवर्षभोगस्याप्यनेनैकवाक्यत्वं। अतःपुनरूपे क्षया स्वत्वनाशादृहस्पतिरपि आहर्त्ता शोधयेत्

भुक्तिमागमञ्चापि संसदि । तत्सुतोभुक्तिमेवैकां पौत्रादिषु न किञ्चन ॥

याज्ञवल्क्यः । आगमस्तु कृतोयेन सोभियुक्त स्तमुद्धरेत् । न तत्सुतस्तत्सुतोवा भुक्तिस्तत्र गरीयसी ॥

भुक्तिशोधनमाह कात्यायनः । आगमोदीर्घ कालस्य निश्छिद्रोन्यरवोज्झितः । प्रत्यर्थिसन्निधानञ्च पश्चाद्भोगद्‌ष्यते ॥

---

॥ अथ विभागकाले निह्नुतस्य पश्चादवगतस्य विभागः ॥

तत्र कात्यायनः । प्रच्छादितन्तु यद्येन पुनरागत्य तत्समं । भजेरन् भ्रातृभिः सार्द्धमभावे तु पितुः सुताः ॥ अन्योन्यापहृतं द्रव्यं दुर्विभक्तञ्च यद्भवेत् । पश्चात्प्राप्तं विभज्येतसमभागेन तद्भृगुः ॥ पश्चात्प्राप्तमित्युपादानात् विभक्ते सति लौकिकप्रमाणेन यस्य कस्यचिन्निह्नुतस्य प्रदर्शनं विनापि न पुनर्व्विभागोनवा तत्र दिव्यं विना क्वचिदप्यनिश्चितद्रव्यत्वेन सम्यग्विभागो न स्यात् ॥ दुर्व्विभक्तमिति अस

म्यग्विभागस्य पुनर्व्विभागं दर्शयति। सकृदंशोनिपतति सकृत् कन्या प्रदीयते। सकृदाह ददानीति चीण्येतानि सतां सकृत्॥ इति मनुनारदकात्यायनवृहस्पतिवचनेपि स्वेच्छापदोपादानं सम्यग्विभागविषयं॥

येनांशोयादृशोभुक्तस्तस्य तन्न विचालयेत्। स्वेच्छाकृतविभागोयः पुनरेव विसम्वदेत्॥ स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृदिति रत्नाकरधृतवृहस्पतिवचनेपि स्वेच्छाकृ पदोपादानात् स्वारसिकन्यूनाधिकपरं नतु भ्रान्त्यादिकृतदुर्व्विभागपरं। पश्चात् प्राप्तमित्यनेन तन्मात्रस्यैव विभागो नपूर्व्वविभक्तं विजनीयमित्यवगम्यते। समभागेनेति अपहर्त्तुरपहर्त्तृतया भागोन देयोऽल्पोवा देयइति निरासार्थं भृगुराहेति शेषः वाक्यार्थकर्म्मताच अविभक्तत्वादेव विभागे प्राप्ते वचनारम्भस्तौर्य्यदोषाभावं ज्ञापयतीति विश्वरूपहलायधप्रभृतयः स्तेयधात्वर्थानिष्पत्तिरित्यभिप्रायः। तथाहि यत्परद्रव्यहरणं स्तेयं तत्परिकीर्त्तितमितिकात्यायनवचने परशब्दादात्मीयत्वव्यवच्छेदेनैव पर

कीयत्वस्यावगमात्। यथामुद्गापचारे प्रतिनिधित्वेन माषप्राप्तावित्र अयज्ञिया वै माषा इति माषानिषिद्धाः। तत्र माषमात्रारम्भकमिश्रितानां निषेधोनतु माषमुद्गोभयारम्भकमिश्रितानां तथात्रापि परमात्रद्रव्यस्यापहार एवस्तेयं नतु स्वपरसाधारणस्याविभक्तदायस्य भोगादिनेति साधारणासाधारणयोरसाधारणस्यैव शीघ्रप्रतीतिरिति। अतएव परकीयत्वेन विशेषतोऽज्ञानतस्तदपहारे स्तैन्यं नतु स्वद्रव्यभ्रमेण परद्रव्यस्यापहर्त्तुरपीति जिनेन्द्रदायभागप्रायश्चित्तविवेककृन्मतं। तत्र स्वीयबुद्ध्या परकीयापहारे यदस्तेयत्वमुक्तं तन्न समीचीनं भागवतीयनृगोपाख्यानविरोधात् तथाहि कस्यचिद्द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने। संपृक्ताऽविदुषा साच मया दत्ता द्विजातये॥ तां नीयमानां तत्स्वामी दृष्ट्वोवाच ममेति च। ममेयं प्रतिगृह्णाह नृगो मे दत्तवानिति॥ विप्रौ विवदमानौ मामूचतुः स्वार्थसाधकौ। भवान्दातापहर्त्तां च तच्छ्रुत्वा मेऽभवद्भ्रमः। तत्पापात् कृकलासत्वं प्राप्तिश्च मे यथाभवत्। तावद्ब्राह्मणमात्मानं कृकलासतनं प्रभोरिति। यत्तु अनेकेषा

मङ्गरीयकसमुदये सदृशतया आत्मीयाङ्गुरीयक भ्रमेण परकीयाङ्गुरीयकविक्रयेन स्तेयत्वं तद् विशेषचिह्नितद्रव्याणां कपर्द्दकादीनां नानास्वामि कानामेकत्र स्थापनदशायामेव परस्परद्रव्यविनि मयादेव परस्परविनियोगे दोषाभावइत्यवगत्य एकत्र स्थापनात् अन्यथा दोषशङ्कया न तथा कुर्य्यादिति एतद्विषये॥

मत्स्यपुराणं। अज्ञानाद्यः पुमान् कुर्य्यात् पर द्रव्यस्य विक्रयं। स निर्द्दोषोऽज्ञानात् पूर्व्वचौरवद्दण्ड मर्हतीति एतदज्ञानकृतदण्डाभावपरमिति॥

तेन परमात्रस्वत्वावच्छिन्नद्रव्ये परमाणुमति मन्तरेण ममेदं यथेष्टविनियोज्यमिति कृत्वा व्यव हारः स्तेयं। सच क्वचिन्मानसः सङ्कल्परूपः क्वचित् कायिकोदानविक्रयादिलक्षणः तस्य चाविभक्त भ्रात्रादिधनेषु सम्भवः। इदंपरकीयमेव इदंममै वेतिविशेषानिश्चयात्॥

अतएव कात्यायनः बन्धुनापहृतं द्रव्यं बला न्नैव प्रदापयेत्। बन्धूनामविभक्तानां भोगं नैव प्रदापयेत्। अत्रापहृतपदं भाक्तं सामादिना

प्रदापयितव्योनतु बलात् अविभक्तेन यद्यधिकं भुक्तं तदसौ न दाप्यः । एवञ्च निधेर्लाभेऽपिन दोषोनष्टस्वामिकत्वात् ॥

तथाच मनुः राजा लब्ध्वा निधिं दद्याद्द्विजेभ्यो ऽर्द्धं द्विजः पुनः । विद्वानशेषमादद्यात् स सर्व्वस्य प्रभुर्यतः । इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् । अनिवेदितविज्ञाता दाप्यस्तं दण्डमेवच ॥ सम्भूयवाणिजिकानान्तु नैतादृशं वचनाभावात् प्रत्युत जिह्मस्त्यजेयुर्निर्लाभमिति याज्ञवल्कीयेन वञ्चकस्य लाभशून्यं कृत्वा त्यागउक्तः दायद्रव्य इव वाणिजिकानामेकधने ऽनेकेषां स्वत्वाभावाच्च किन्तु मिलनात्तदनिश्चय मात्रमिति ॥

---

## ॥ अथ स्त्रीधनं ॥

तत्र कात्यायनः । प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः । भर्त्तुःस्वाम्यं भवेत्तत्र शेषन्तुस्त्रीधनं स्मृतं ॥ अन्यतः पितृमातृभर्तृकुलव्यतिरिक्ताद्यल्लब्धं शिल्पेनवा यदर्ज्जितं तत्र भर्त्तुः स्वातन्त्र्यं तेन स्त्रियाअपि धनं न स्त्रीधनं अस्वातन्त्र्यात् एतद्व्यतिरिक्तधने स्वत्वं स्त्रियाएव दानाद्यधिकारात् ॥

मनुविष्णू। पत्यौ जीवति यः कश्चिदलङ्कारोधृतो भवेत्। न तं भजेरन् दायादाभजमानाः पतन्ति ते ॥ पत्युरदत्तोऽपि तदनुज्ञया परिहितोऽलङ्कार स्तावतैव भार्य्यायाः स्वीयोभवतीति मेधातिथिः ॥

कात्यायनः। ऊढया कन्यया वापि पत्युः पितृ गृहे ऽथवा। भर्त्तुः सकाशात् पित्रोर्व्वा लब्धं सौदायिकं स्मृतं॥ सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते। यस्मात्तदाऽनृशंस्यार्थं तैर्दत्तं तत् प्रजीवनं॥ सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितं। विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि॥ सुदायेभ्यः पितृमातृभर्तृकुलसम्बन्धिभ्योलब्धं सौदायिकं आनृशंस्यमनैष्ठुर्य्यं ॥

नारदः। भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृते पितत्। सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते॥ भर्तृदत्तविशेषणात् भर्तृदत्तस्थावराद्दतेऽन्य स्थावरं देयमेव अन्यथा यथेष्टं स्थावरेष्वपीति कात्यायनोक्तं विरुद्ध्यते। कल्पतरुरत्नाकरयोः कात्यायनः॥

अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिनी।
व्यभिचाररता याच स्त्रीधनं नच सार्हति ॥

याज्ञवल्क्यः दुर्भिक्षे धर्म्मकार्य्ये वा व्याधौ संप्रतिरोधके। गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति। संप्रतिरोधके भोजनाद्यवरोधकारि ण्युत्तमर्णादिके। अन्यत्रतु ॥

कात्यायनः। न भर्त्ता नैवच सुतोन पिता भ्रातरो नच आदानेवा विसर्गेवा स्त्रीधने प्रभ विष्णवः ॥

---

## ॥ अथ स्त्रीधनाधिकारिणः ॥

देवलः सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं विदुः। अप्रजायां हरेद्भर्त्ता माता भ्राता पिता पिवा ॥ अत्र द्वन्द्वनिर्द्देशात् पुत्रकन्ययोस्तुल्याधि कारः अन्यतराभावे ऽन्यतरस्य तद्धनं एतयो रभावे ऊढाया दुहितुः पुत्रवत्याः सम्भावित पुत्रायाश्च तुल्याधिकारः स्वपुत्रद्वारेण पार्व्वणे सपिण्डीकरणादूर्द्ध्वं यत्पितृभ्यः प्रदीयते। सर्व्वेषां गुरुरा माता इतिधर्म्मेषु निश्चयः। इति माता तपोक्ततद्भोग्यपतिपिण्डदानसम्भवात् ॥

तथाच नारदः। पुत्राभावेतु दुहिता तुल्य सन्तानदर्शनात्। अतएव एतादृशदुहित्रभावे पौत्राधिकारः तदभावे दौहित्राधिकारः दौहित्रोपि ह्यमुत्रैनं सन्तारयति पौत्रवदिति मनुवचने। दौहित्रे पौत्रधर्म्मातिदेशात् पुत्रेण परिणीतदुहितुर्ब्बाधाद्बाधकपुत्रेणबाध्यदुहितृपुत्रबाधस्य न्याय्यत्वात् एवं तदभावे प्रपौत्रः तस्याप्यपिण्डदातृत्वात् तदभावे बन्ध्याविधवयोर्मातृधनाधिकारः तयोरपितत्प्रजात्वात् तदभावे तु भर्त्ता। एतच्च न पितृमातृदत्तधनविषयं तत्र भ्रातुरधिकारात्॥

तथाच वृद्धकात्यायनः। पितृभ्याञ्चैव यद्दत्तं दुहितुः स्थावरन्धनं। अप्रजायामतीतायां भ्रातृगामि तु सर्व्वदा॥ मातुः परिणयनकाललब्धन्तु पुत्रसत्त्वेपि क्रमेणानूढोढदुहित्रोरेवाधिकारः मातुः पारिणाय्यं स्त्रियो विभजेरन्निति वशिष्ठोक्तेः। स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्चेति गौतमवचनेन प्रथममप्रत्तानामवाग्दत्तानां तद

भावेत्वप्रतिष्ठितानां वाग्दत्तानां ईषदर्थे नञ् तदभावे चकारसमुच्चितानामूढानां स्त्रीधनं दुहितृणामिति सामान्यतः प्रागुक्तत्वात् अप्रत्ता नामित्यादेस्तु। क्रमार्थत्वेनोपसंहारार्थत्वात्॥

व्यक्तमाह मनुः मातुश्च यौतुकं यत्स्यात् कुमारीभाग एव सः इति यौतुकपदं युमिश्रणे इत्य स्मात् सिद्धं मिश्रताच स्त्रीपुंसयोर्विवाहाद्भवति ॥ यदेतद्धृदयन्तव तदस्तु हृदयं मम यदिदं हृदयं मम तदस्तु हृदयं तवेतिमन्त्रलिङ्गात् यौतकं तदिति वाचस्पतिमिश्ररायमुकुटधृतात् यौतकं यौतुकमपि साधु । परिणयनकालः परिणयन पूर्व्वापरो भूतकालः सच वृद्धिश्राद्धारम्भपत्यभि वादनान्तोविवाहतत्त्वे विवृतः॥

यत्तु मनुवचनं स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन।ब्राह्मणी तद्धरेत् कन्या तदपत्यस्य वाभवे दिति तत्पित्रा दत्तमिति विशेषणाद्विवाहसमया दन्यदापि पितृदत्तं कन्याया एवेत्येतदर्थं ब्राह्मणी पदन्तु कन्यामात्रपरं। यद्वा क्षत्रियादिस्त्रीणामनप त्यानां पितृदत्तं धनं सपत्नीदुहिता ब्राह्मणी

कन्या हरेत् नपुनरप्रजस्त्रीधनं भर्त्तुरिति वचनाव काशइतिवचनार्थः । तदभावे पुत्राधिकारः दुहितॄणामभावेतु रिक्थं पुत्रेषु तद्भवेदिति मनु वचनात् एवं पुत्राधिकारात् प्रागदुहित्रधिकार विधायकवचनान्तराण्यप्येतद्विषयकानि पुत्राद्य भावेतु ब्राह्म्यादिपञ्चकविवाहकालीनं स्त्रीधनं भर्त्तुः आसुरादित्रय विवाहकालीनन्तु मातुस्तद भावे पितुः ॥

यथा मनुः ब्राह्मदैवार्षगान्धर्व्वप्राजापत्येषु यद्धनं। अतीतायामप्रजायां भर्त्तुरेव तदिष्यते॥यत्त स्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु। अतीतायाम प्रजायां मातापित्रोस्तदिष्यते। कन्याधनाधिकारे क्रममाह वौधायनः। रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयं। तदभावे भवेन्मातुस्तदभावे भवेत्पितुः॥ अत्र क्रमदर्शनात् पूर्व्ववचने माता पित्रोरित्यत्र पाठक्रमेणाधिकारोनतु द्वन्द्वनिर्द्दे शात् समुच्चितेन ॥

वृहस्पतिः मातुःस्वसा मातुलानी पितृव्यस्त्री पितृस्वसा। श्वश्रूः पूर्व्वजपत्नीच मातृतुल्याः प्रकी

र्त्तिताः ॥ यदासामौरसोनस्यात् सुतोदौहित्रएव वा तत्सुतोवा धनन्तासां स्वस्त्रीयाद्याः समाप्नुयुः ॥ औरसपद् कन्यापुत्रोभयपरं सुतइतिसपत्नीपुत्र परं ॥

सर्व्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत्। सर्व्वास्तास्तेन पुत्रेण प्राह पुत्रवतीमनुरितिमनु स्मृतेः। एकपत्नीनामिति एकः पतिर्यासां ताः नतु सुत पद्मौरसविशेषणं वैयर्थ्यात् सपत्नीपुत्रसद्भावे स्वस्त्रीयाद्यधिकारापत्तेश्च तत्सुतइति पौत्रसपत्नी पौत्रपरं नतु दौहित्रपुत्रपरं तस्य स्वभोग्यभर्त्तृ पिण्डदानानधिकारात् अत्र प्रागुक्तानुसारात् दौहित्रपर्य्यन्तानन्तरमेव सपत्नीपुत्रतत्पुत्रयोर धिकारः नतु प्रागुक्तभर्त्त्रादिपितृपर्य्यन्ताभावेपी तिवाच्यं भर्त्त्रादीनां धनिभोग्यपार्व्वणपिण्डदाना नधिकारात् तस्मादेतेषां सपत्नीपौत्रान्तानां तत्सुतोवेति वाशब्दसमुच्चितानां सामान्यं पुत्र कन्यानां स्मृतायां स्त्रीधनं विदुः। अप्रजायां हरे द्भर्त्ता माताभ्राता पितापिवा इति देवलोक्तानां. भर्त्त्रादिपितृपर्य्यन्तानाञ्चाभावएव सत्स्वपिश्वशुर

भ्रातृश्वशुरादिषु स्वस्रीयाद्या इत्यनेन भगिनी सुतभर्तृभागिनेयभर्तृज्येष्ठकनिष्ठोभयरूप भ्रातृसु तस्वभ्रातृपुत्रजामातृदेवराणां मातृस्वस्रादिष्वमे ऽधिकारः अनन्यगतेर्व्वचनात्॥

अत्र त्रयाणामुदकङ्कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः संप्रदा तेषां पञ्चमोनोपपद्यतइति दाय भागप्रकरणीयमनुस्मृतेः पिण्डदोऽंशहरइति याज्ञ वल्कीयात् मातृतुल्याः प्रकीर्त्तिताइत्यनेन स्वस्रीयादीनां पुत्रत्वज्ञापनेन पिण्डदत्तद्वचनस्य दायभागप्रकरणे उपकारतारतम्येन धनाधि कारक्रमज्ञापनेनैकप्रयोजनकत्वात् ॥

मातुलोभागिनेयस्य स्वस्रीयोमातुलस्य च। श्वशु रस्य गुरोश्चैव सख्युर्मातामहस्य च। एतेषाञ्चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथाः पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिरिति शातातपवच नात् पिण्डदानविशेषेणैव षष्ठामेषामधिकार क्रमः प्रतिपत्तव्यः पाठक्रमादर्थक्रमस्य बल वत्वात् अन्यथा सर्व्वशेषे देवराधिकारे महाजन विरोधःस्यात्। तत्र प्रथमं देवरः तत्पिण्डतद्भर्तृ

पिण्डतङ्गर्तृदेयपुरुषत्रयपिण्डदत्वात् सपिण्ड
त्वाच्च भ्रातृस्त्रीधनेऽधिकारी तदभावे भ्रातृश्वशुर
देवरयोः सुतौ तत्पिण्डतङ्गर्तृपिण्डतङ्गर्तृदेय
पुरुषद्वयपिण्डदत्वात् सपिण्डत्वाच्च तयोरभावे
त्वसपिण्डोऽपि भगिनीपुत्रस्तत्पिण्डतत्पुत्रदेयतत्पि
त्रादिपिण्डत्रयदत्वात्तदभावे भर्तृभागिनेयः
पुत्राङ्गर्त्तुर्दुर्व्वलत्वेन तत्स्थानपातिनोरपि भगि
नीपुत्रभर्तृभागिनेययोस्तथैव बलावलस्य न्याय्य
त्वेन तङ्गर्तृदेयपुरुषत्रयपिण्डदत्वात् तत्पिण्ड
दत्वात् तङ्गर्तृपिण्डदत्वाच्च मातुलानी धनेऽ
धिकारी तदभावे भ्रातृपुत्रः तत्पिण्डतत्पुत्र
देयतत्पित्रादिपिण्डद्वयदत्वात् पितृस्वसुर्धनेऽधि
कारी तदभावे श्वशुरयोः पिण्डदाना ज्जामाता
श्वश्रूधनेऽधिकारीतिक्रमः स्वस्त्रीयाद्या इतित्वऽधि
कारिमात्रपरं न पाठिकक्रमपरं एषां षण्णां
प्रातिस्विकोक्तानामभावे सपिण्डानन्तर्य्येण श्वशु
रादिवदधिकारी नच सपिण्डाभावे मातृस्व
सेति वचनं वाच्यं अस्मिन्नऽधिकारिगणने देवर

तत्सुतभ्रातृश्वशुरसुतानामधिकारज्ञापनादासन्न तरश्वशुरभ्रातृश्वशुरादेः परित्यागादिति ॥

---

॥ अथापुत्रधनाधिकारिणः ॥

याज्ञवल्क्यः। पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुतोगोत्रजोबन्धुः शिष्यः सब्रह्मचारिणः॥ एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः। स्वर्य्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयं विधिः॥

तथा विष्णुः। अपुत्रस्य धनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे दौहित्रगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे भ्रातृगामि तदभावे भ्रातृपुत्रगामि तदभावे सकुल्यगामि तदभावे बन्धुगामि तदभावे शिष्यगामि तदभावे सहाध्यायिगामि तदभावे ब्राह्मणधनवर्ज्जं राजगामीति॥ अत्रापुत्रपदं पुत्रपौत्रप्रपौत्राभावपरं तेषां पार्व्वणपिण्डदातृत्वाविशेषात् अतएव बौधायनवचने पुत्रपौत्रप्रपौत्रानुपक्रम्य सत्स्वङ्गजेषु तद्गामी ह्यर्थोभवतीत्युक्तं तद्यथा प्रपितामहः पितामहः पिता स्वयं सोदर्य्याभ्रातरः सवर्णायाः पुत्रः पौत्रः

प्रपौत्र एतानविभक्तदायादान् सपिण्डानाचष्टे विभक्तदायादान् सकुल्यानाचष्टे सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवतीति । अस्यार्थः पित्रादिपिण्डत्रयेषु सपिण्डनेन भोक्तृत्वात् पुत्रादिभिस्त्रिभिस्तत्पिण्डस्यैव दानात् यस्य जीवन् यत्पिण्डदाता स मृतः सन् सपिण्डनेन तत्पिण्डभोक्ता एवं मध्यस्थितः पुरुषः पूर्व्वेषां जीवन् पिण्डदाता मृतस्य तत्पिण्डभोक्ता परेषां जीवतां पिण्डसम्प्रदानभूत आसीत् मृतैस्य तैः सह दौहित्रादिदेयपिण्डभोक्ता पितृ तो येषामयं पिण्डदाता ये वा तत्पिण्डदातारस्ते अविभक्तं पिण्डरूपं दायमश्नन्तीति अविभक्तदायादाः सपिण्डाः पञ्चमस्य पूर्व्वस्य मध्यमः पञ्चमो न पिण्डदाता न च तत्पिण्डभोक्ता एवमधस्तनोऽपि पञ्चमो न मध्यमस्य पिण्डदाता नापि तत्पिण्डभोक्ता तेन वृद्धप्रपितामहात् प्रभृतित्रयः पूर्व्वपुरुषाः प्रतिनप्तृतः प्रभृत्यधस्तनास्त्रयः पुरुषा एकपिण्डभोक्तृत्वाभावाद्विभक्तदायादाः सकुल्या इत्याचष्टे । इदं सपिण्डत्वं सकुल्यत्वञ्च दायग्रहणार्थमित्युक्तं अशौचविवाहा

द्यर्थञ्च पिण्डलेपभुजामपीति विवृतं शुद्धितत्त्वे। पुत्रादिविभागक्रमं व्यक्तमाह रत्नाकरधृत कात्यायनः। अविभक्ते मृते पुत्रे तत्सुतं रिक्थभागिनं। कुर्व्वीत जीवनं येन लब्धं नैव पितामहात्॥ लभेतांशं स पित्रन्तु पितृव्यात्तस्य वा सुतात्। सएवांशन्तु सर्व्वेषां भ्रातॄणां न्यायतोभवेत्॥ लभेत तत्सुतोवापि निवृत्तिः परतोभवेत्। जीवनं जीवनोचितद्रव्यं यदा भ्रातॄणां कश्चिदेकोन विद्यते तदा तत्सुतस्य पित्रंशोदातव्यः यदा विपन्नस्याप्यनेक पुत्रास्तदा एकः पित्रंशस्तेषां मिलित्वा दातव्यः एवं तत्सुतोऽप्यंशं लभेत तत्सुतस्य भागोनिवर्त्तेत इत्यर्थः एतच्च सहवासविषयं॥

यथा देवलः। अविभक्तविभक्तानां कुल्यानां वसतां सह। भूयोदायविभागः स्यादाचतुर्थादिति स्थितिः॥ अविभक्तानां विभक्तानां सहवसतां संसृष्टानां वा पुनर्व्विभागोभ्रातृतत्सुततत्सुतपर्य्यन्तमेव तत्सुताच्चतुर्थान्निवर्त्तते इति प्रागुक्तसप्तम पुरुषपर्य्यन्तं विभागदानन्तु भिन्नदेशादागताना

मिति न विरोधः तेन प्रपौत्रपर्य्यन्तानामभावे पत्नी धनाधिकारिणी ॥

यथा कात्यायनः। भर्तृदायं मृते पत्यौ विन्यसेत् स्त्री यथेष्टतः। विद्यमाने तु संरक्षेत् क्षपयेत्तत्कुलेऽन्यथा॥ अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता। भुञ्जीतामरणात् क्षान्ता दायादाऊर्द्ध्वमाप्नुयुः। यथेष्टतइति धर्म्मार्थं॥

तथाच व्यासः। लोकान्तरस्थं भर्त्तारमात्मानञ्च वरानने। तारयत्युभयं नारी नित्यं धर्म्मपरायणा॥ मदनपारिजातधृतस्मृतिः। यद्यदिष्टतमं लोके यच्च पत्युः समीहितं। तत्तद्गुणवते देयं पतिप्रीणनकाम्यया॥ भर्त्तुः शयनं पालयन्ती नान्यगामिनी। अतएव हरिवंशीयपुण्यकव्रतोपाख्याने दानोपवासपुण्यानि सुकृतान्यप्यरुन्धति। निष्फलान्यसतीनां हि पुण्यकानि तथा शुभे॥

तथा वृहन्मनुः। अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत च॥ तत्पिण्डमित्यत्र तदित्यनुषज्यते तच्छब्देन भर्त्तुः परामर्शाद्भर्त्तुः कृत्स्नमंशं यावदंशं

हरेत् न तु वर्त्तनजीवनोचितमात्रं पत्नी सवर्णा ज्येष्ठा पत्नीत्यभिधानात् ॥

ज्येष्ठत्वमाह मनुः। यदि स्वाश्च पराश्चैव विन्देरन् योषितोद्विजाः। तासां वर्णक्रमेणैव ज्यैष्ठं पूजा च वेश्म च। तदन्यस्याभार्य्यायाः पोषणमात्रमाह।

नारदः। भ्रातॄणामप्रजः प्रेयात् कश्चिच्चेत्प्रव्रजेच्च वा। विभजेरन् धनन्तस्य शेषास्ते स्त्रीधनं विना॥ भरणञ्चास्य कुर्व्वीरन् स्त्रीणामाजीवनक्षयात्। रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्द्युरितरासु च। प्रेयात् म्रियेत एवं पत्नीभार्य्याभेदृक्त्त्॥

ततोदायमपुत्रस्य विभजेरन् सहोदराः। तुल्या दुहितरोवापि ध्रियमाणः पितापि वा॥ सवर्णा भ्रातरोमाता भार्य्या चैव यथाक्रमं। तेषामभावे गृह्णीयुः कुल्यानां सहवासिनः इत्यादिवचनानि व्यवस्थेयानि ध्रियमाणोजीवन्। वस्तुतस्तु एतदुक्तक्रमः सर्व्वत्र न ग्राह्यः उपकारतारतम्यमूलकवद्व्यमाणवचनविरोधात् अतएवात्र क्रमानास्थासूचकमपि वापीत्युक्तं पत्न्यभावे दुहितरः अत्र बहुवचनात् कन्योढादौहित्राणां परिग्रहः तत्र

कन्योढयोस्तु अपुत्रस्य मृतस्य कुमारी ऋक्थं गृह्णीयात् तदभावे चोढेति पराशरवचनात् क्रमः तदभावे दौहित्रः पौत्रदौहित्रयोर्लोके विशेषो नास्ति धर्म्मतः। तयोर्हि मातापितरौ सम्भूतौ तस्य देहतइति मनुवचने पौत्रतुल्यत्वाभिधानेन यथा पुत्राभावे पौत्रः तथा दुहित्रभावे दौहित्रः अत एव गोविन्दराजधृतोविष्णुः। अपुत्रपौत्रे संसारे दौहित्राधनमाप्नुयुः। पूर्व्वेषां हि स्वधाकारे पौत्र दौहित्रकाः समाः। दौहित्राभावेपितरौ तत्र प्रथमं पिता ततोमाता पूर्व्वोक्तविष्णुस्मृतेः। तदभावे भ्रातरः अत्रापि वहुवचनं सोदरासोदरसंसृष्टत्वभेदेनाधिकारिभेदार्थं अतएव एकपितृजात योरपि सोदरविमातृजयोर्मृतदेयषट्पुरुषपिण्ड दातृत्वन सोदरस्यैव धनाधिकारोनतु पित्रादि त्रयमात्रपिण्डदातुर्विमातृजस्य क्वचित्तु संसृष्टत्वेन विमातृजस्याप्यसंसृष्टसोदरेण सह तुल्याधिकारिता सोदरस्य संसृष्टत्वेन सएव गृह्णीयान्न संसृष्ट्यपि विमातृजइति॥

तथाच याज्ञवल्क्यः। संसृष्टिनस्तु संसृष्टी सोदर

स्य तु सोदरः। दद्याच्चापहरेदंशं जातस्य च मृत स्य च। अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्योधनं हरेत्। असंसृष्ट्यपि चादद्यात्संसृष्टोनान्यमातृजः॥ संसृष्टि नमाह वृहस्पतिः। विभक्तोयः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः। पितृव्येणाथ वा प्रीत्या सतु संसृष्ट उच्यते । तेन विभागानन्तरं मैत्र्यात् पितृभ्रातृ पितृव्य भ्रातृपुत्राणां यथायथमेकत्रावस्थानं संसर्गः तद्युक्तः संसर्गी एवम्भूतस्य संसर्गिणोमृतस्य धनं तज्जातस्यापत्यस्य तदपत्याभावे संसर्गी स्वयं गृह्णीयात् एवं सोदरस्य तु सो... अत्र विशेष यति॥

यमः। अविभक्तं स्थावरं यत्सर्व्वेषामेव तद्भवेत्। विभक्तं स्थावरं प्राप्तं नान्योदर्य्यैः कदाचन॥ सर्व्वेषां सोदरासोदराणा स्थावरातिरिक्तन्तु विभक्ता विभक्तं सोदराणामेवेत्यर्थतः सिद्धं तेषां तत्पिण्ड दातृत्वेन तन्मातृभोग्यपार्व्वणपिण्डदातृत्वेन चाधिकारात्॥

व्यक्तमाह मनुः। येषां ज्येष्ठः कनिष्ठोवा हीयेतां शप्रदानतः म्रियेतान्यतरोवापि तस्य भागोन

लुप्यते। अंशप्रदानतोविभागात् पूर्व्वं म्रीयेत प्रव्र ज्यादिनेति शेषः केषामंशविभागइत्यत्राह सएव। सोदर्य्याविभजेरंस्तं समेत्य सहिताः समं। भ्रातरो ये च संसृष्टाभगिन्यश्च सनाभयः॥

वृहस्पतिः। विभक्ताभ्रातरोये च संप्रीत्यैकत्र संस्थिताः। पुनर्विभागकरणे तेषां ज्यैष्ठं न विद्यते॥ यदि कश्चित्प्रमीयेत प्रव्रजेद्वा कथञ्चन। न लुप्यते तस्य भागः सोदरस्य विधीयते। या तस्य भगिनी सा तु ततोऽशं लब्धुमर्हति। अनपत्यस्य धर्म्मोऽयम भार्य्यापितृक[illegible]। संसृष्टानान्तु यः कश्चिद्विद्या शौर्य्यादिना धनं। प्राप्नोति तस्य दातव्योद्व्यंशः शेषाः समांशिनः॥ अत्र संसृष्टानां ज्येष्ठांशाभावो वर्णत्रयाणां बोध्यः शूद्रस्य तु सर्व्वदा ज्येष्ठांशा भावात्॥

तथाच मनुः। समवर्णासु ये जाताः सर्व्वे पुत्राद्वि जन्मनाम्। उद्धारं ज्यायसे दत्वा भजेरन्नितरे समं। शूद्रस्य तु सवर्णैव नान्या भार्य्योपदिश्यते॥ तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत्। समांशाः समभागाएव भवेयुर्नोद्धारः कस्यचिद्देयइति

कुल्लूकभट्टः युक्तञ्चैतत् तथाहि ज्येष्ठस्य विंश उद्धारः सर्व्वद्रव्याच्च यद्वरं । ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः॥ इति मनुना सामान्यतो ज्येष्ठादीनामुद्धाराभिधानात् द्विजन्मनां इत्यस्य वर्णमात्रोपलक्षकत्वशङ्कानिरासायोत्तरवचनोत्त रार्द्धं न च पुन्नामनरकत्रातृत्वाविशेषाच्च द्रव्यस्या प्यधिकारइति वाच्यं तद्‌निस्तारकमध्यमकनीय सोरर्द्धपादोद्धारदर्शनेन तस्याप्रयोजकत्वात् नचो द्धारांशयोर्भेदात् समांशिनाभिधानेन पूर्व्वोक्ता सवर्णाजातविषमांशभागएव शूद्रस्य निषिध्यते नोद्धारइति वाच्यं शूद्रस्य तु सवर्णैवेति पूर्व्वार्द्धे नैव तत्सिद्धमिति द्विजन्मनामप्युद्धारनिरासाय समांशता मनुना विहिता समानं समवर्णास्विति वचनमभिधाय द्विप्रकारोविभागस्तु दायादानां प्रदर्शितः। वयोज्येष्ठक्रमेणैकः परा समांशकल्पना। इति प्रकीर्त्तितइत्यत्र प्रदर्शितइति वृहस्पतिः अत्र भगिन्यधिकारोविवाहोचितद्रव्यलाभाय मुनिभिः संग्रहकृद्भिस्तथोक्तत्वात् अभार्य्यापितृकस्येत्यत्र पितृपदमेकशेषात् पितृमातृपरं मातुरभावे भ्रात्र

धिकारस्य विष्णवादिभिरुक्तत्वात् ततश्च संसृष्टि नस्तु संसृष्टीत्येतद्वचनं तुल्यरूपसम्बन्धिसमवाये संसर्गकृतविशेषप्रतिपत्त्यर्थं तेन सोदराणां साप त्नानां भ्रातृपुत्राणां पितृव्याणां तुल्यानां सद्भावे संसर्गी गृह्णीयात् वाक्यादविशेषश्रुतेः पूर्व्ववचने सर्व्वेषामेव प्रकृतत्वात् सर्व्वेषु चाक्षेपासम्भवात् अतोन भ्रातृमात्रविषयमिदं वचनमिति जीमूत वाहनः। सोदरे त्वसंसृष्टिनि संसृष्टिन्यसोदरे च सति कतरस्तावद्गृह्णीयात् एवं सोदरासोदरयोः संसृष्टयोः सद्भावे कतरद्इत्यत्र प्रथमतः आह अन्योदर्य्यस्त्विति अन्योदर्य्यः पुनः संसृष्टी सन् गृह्णीयात् नान्योदर्य्यमात्रः किन्तु असंसृष्ट्यपि पूर्व्ववचनस्थसोदरपदानुषङ्गात् प्राप्तः सोदरश्च गृह्णीयात् तेनैकत्र विषये पूर्व्ववचनोक्तसंसृष्टत्व सोदरत्वयोरेकशः सम्बन्धेन तुल्यत्वादुभयोर्वि भज्य ग्रहणं तदुभयसत्त्वे चासोदर्य्यस्यासंसृष्टिनोऽ तुल्यरूपत्वान्नेति द्वितीयेआह संसृष्टोनान्यमातृज इति सोदरे संसृष्टिनि सति अन्यमातृजः संसृ ष्ट्यपि न गृह्णीयात् अर्थात्तत्र संसृष्टी सोदरएव

गृह्णीयात् संसृष्टत्वाविशेषेऽपि सोदरत्वेन तस्यैव बलवत्त्वात्। दायभागकारस्तु अन्योदर्य्यस्तु संसृष्टी सन् सत्यपि सोदरेऽसंसृष्टिनि धनं हरेत् नान्योदर्य्यः संसृष्ट्यपि गृह्णीयादिति पूर्व्वार्द्धस्यार्थः। तत्र किं सोदरस्तदानीं न गृह्णीयादेवेत्यपेक्षायामुत्तरार्द्धेनोक्तं असंसृष्ट्यपि चादद्यात् सोदर इत्यनुषज्यते न संसृष्टोऽन्यमातृजः केवलः किन्तु उभाभ्यामेव विभज्य ग्रहीतव्यमित्याहुः॥

मिताक्षरादयोऽप्येवं। याज्ञवल्क्यदीपकलिकायां शूलपाणिमहामहोपाध्यायास्तु अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यधनं हरेत्। असंसृष्ट्यपि सोदर एव गृह्णीयात् नतु संसृष्टः सापत्नोभ्राता संसृष्ट इति गर्भसंसृष्टः सोदर इति केचित् नान्योदर्य्योधनं हरेदिति पाठे अन्योदर्य्यः सन् धनं न गृह्णीयात् इति व्याख्या असंसृष्टिसोदरस्याधिकारार्थमिदं वचनमतोन पुनरुक्तिरित्याहुः। रत्नाकरप्रभृतयस्तु यस्तु कल्पतरौ नान्योदर्य्यधनं हरेदिति पाठो दृश्यते स मूलभूतयाज्ञवल्क्यमिताक्षरापारिजातहलायुधग्रन्थेषु नान्योदर्य्योधनं हरेदिति पाठ

दर्शनात् तदनुसारव्याख्यादर्शनाच्च लिपिकर प्रमादइत्याहुः। भ्रातृणामभावे तत्सुतः तत्र प्रथमं सोदरपुत्रः॥

स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वधा मयं। पितामही च स्वेनैव स्वेनैव प्रपितामहीति वृहस्पतिवचनात् । सोदरभ्रातृपुत्रदत्तपिता महपिण्डे धनिमातुर्भोगश्रुतेस्तद्गतधनत्वेन तथो पकारदर्शनात् तदभावे वैमात्रेयपुत्रः तदभावे गोत्रजः। तत्र त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः संप्रदातैषां पञ्चमोनोपपद्यते। अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं हरेदिति मनूक्ता तस्य मृतस्य धनिनः सपिण्डात् सपिण्ड मध्यात् अनन्तरः सन्निहिततरस्तस्य धनं भवेत् एवमेव कुल्लूकभट्टः। बहवो ज्ञातयोयत्र सकुल्या बान्धवास्तथा। योह्यासन्नतरस्तेषां सोऽनपत्यधनं हरेदिति वृहस्पत्युक्तत्वाच्च पिण्डदानसम्बन्धता रतम्येन आसन्नजननतारतम्येन च धनेष्वधि कारी तत्र यथा दौहित्रान्तस्वसन्तानाभावेऽ न्योऽधिकारी एवं भ्रातृपुत्राभावे तद्दौहित्राद्यः

पितुः सन्तानोऽधिकारी तदभावे पितामहः तद भावे पितामही ॥

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्य्यपि च वृत्तायां पितुर्माता धनं हरे दितिमनुवचनात् यथा पित्रभावे माता तथा पितामहाभावे पितामही तदभावे पितामहदौहित्रान्तसन्तानः पितरि तथा दर्शनात् एवं प्रपितामहः प्रपितामही तत्सन्तानाश्चपि हृतभोग्यपिण्डदात्रभावे बन्धुरिति मातामहमातुलादिः तत्रापि पित्रादिवत्सति मातामहे सएव तदभावे यथाक्रमं मातुलादिः मृतदेयमातामहादिपिण्डदत्वात् तदभावे सकुल्योविभक्तपिण्डः प्रतिनप्तृतः प्रभृतिपुरुषत्रयमधस्तनं वृद्धप्रपितामहादिसन्ततिश्च अतएव दायकता ननु सहोदरभ्रातृपुत्रवत् पितृव्यस्यापि धनिदेयपूर्व्वपुरुषदर्यापिण्डदत्वात् धनिपितृव्यभ्रातृपुत्रयोस्तुल्योऽधिकारः स्यादुच्यते पितृव्योहि धनिपितामहप्रपितामहयोः पिण्डदः भ्रातृपुत्रस्तु धनिपितरं प्रधानमादाय पुरुषद्वयपिण्डंदद्इति सएव बलवान् इति पितृव्यात्

पूर्व्वमधिक्रियते इत्युक्तं । एवं यत्र मृतस्य पितृव्यमृतपितृव्यपुत्रयोः सत्त्वे धनिदेयपितामह प्रपितामहपिण्डदातृत्वाविशेषेऽपि अनेकपितृका णान्तु पितृतोभागकल्पनेत्यत्र जननसान्निध्यतार तम्येन भागदर्शनात् अत्रापि जननसन्निकर्षा धिक्येन पितृव्यस्यैवाधिकारः अतएव मिताक्ष रायां पितामहपितृव्यतत्पुत्राः क्रमेणाधिकारिण इत्युक्तं । विवादचिन्तामणावपि अपुत्रधनाधि कारे भ्रातुरभावे तत्पुत्रः तदभावे आसन्नस पिण्ड इत्युक्तं वृद्धसत्युक्तबान्धवाइत्यनेन यथाक्रमं आसन्नपितृमातृबान्धवाधनाधिकारिणः ते च आत्मपितुःस्वसुः पुत्राआत्ममातुःस्वसुः सुताः। आत्ममातुलपुत्राश्च विज्ञेयाआत्मबान्धवाः। पितुः पितुःस्वसुः पुत्राः पितुर्मातुःस्वसुः सुताः । पितु र्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः। मातुर्मातुः स्वसुः पुत्रामातुः पितुःस्वसुः सुताः। मातुर्मातुल पुत्राश्च विज्ञेयामातृबान्धवाः॥ आपस्तम्बः। अन्ते वासी वार्थीस्तदर्थेषु धर्म्मकृत्येषु योजयेद्दुहिता वेति । तदर्थेषु मासिकादिना तद्भोगार्थं धर्म्म

कृत्येष्विति अदृष्टार्थमिति एवञ्च यस्य मृतस्य धनं देशान्तरस्थतद्धनाधिकारिसत्त्वे तद्धनविना शसम्भावनायां तदौर्द्ध्वदेहिककर्म्मार्थं तत्पुण्यार्थञ्च येन केनापि दातु युक्तं॥

यदृच्छयापि यः कुर्य्यादार्त्विज्यं प्रीतिपूर्व्वकमिति नारदवचने तस्यापि प्रतिनिधित्वात् एतत् प्रपञ्चितं शुद्धितत्त्वे। दायभागकृतापि सर्व्वत्रोक्त रीत्या मृतधनस्य मृतार्थत्वमनुसन्धेयमिति वदता प्येतत् स्वचितमिति॥महामहोपाध्यायश्रीहरिहर भट्टाचार्य्यात्मज श्रीरघुनन्दनभट्टाचार्य्यविरचिते स्मृतितत्त्वे दायतत्त्वं समाप्तं॥ शकाब्दे १७५०॥

# DÁYA KRÁMA SANGRAHA,

A

COMPENDIUM OF THE ORDER

OF

INHERITANCE,

BY

*Krishna Terkálankára Bhattácharya.*

EDITED BY

LAKSHMI NÁRAYÁN SERMÁ,

*Librarian, Sanscrit College*

PUBLISHED UNDER THE AUTHORITY OF THE COMMITTEE

OF

Public Instruction.

PRINTED AT THE EDUCATION PRESS.

1828.

श्रीकृष्णतर्कालङ्कारभट्टाचार्य्यकृतः

---

# दायाधिकारक्रमसंग्रहः

श्रीयुतकमिङ्गिसाहेवानुज्ञया

कलिकाताराजधान्यां इडुकेशन्मुद्रायन्त्रालये

श्रीलक्ष्मीनारायणशर्म्मणा शोधितो मुद्रितश्च

सम्वत् १८८५ शकाब्दाः १७५०

॥ अथ दायक्रमसंग्रहस्य सूचीपत्रं ॥

---

इति दायक्रमसंग्रहसूची समाप्ता

॥ श्रीकृष्णाय नमः ॥

---

जगदम्बापदद्वन्द्वमापदां क्षयसाधनं । विश्व कोटिविनिर्म्माणस्थितिसंहारकारणं ॥ निधाय हृदये दायाधिकारंक्रमसंग्रहः । क्रियते पण्डिता मोदी श्रीमच्छ्रीकृष्णशर्म्मणा ॥

---

॥ अथ दायाधिकारक्रमः ॥

तत्रादौ मृतधने औरसपुत्रस्याधिकारः। ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समं । भजेरन् पैतृकं रिक्थमनीशास्तेहि जीवतोरित्यादिवचनैः पितृमरणानन्तरं पुत्रस्य स्वत्वज्ञापनात् । तद भावे पौत्रस्य तदभावे प्रपौत्रस्याधिकारः ॥ मृत

पितृकपात्रमृतपितृपितामहकप्रपौत्रयोः पुत्रेण सह तुल्याधिकारः तेषां पार्व्वणपिण्डदातृत्वेन उपकाराविशेषात् । जीवत्पितृकयोस्तु पौत्रप्रपौत्रयोर्नाधिकारः। पार्व्वणपिण्डदानाभावेन उपकाराभावात्॥ एषामभावे पत्नी धनाधिकारिणी॥

पत्नी दुहितरश्चैवेत्यादिवचनात् ॥ तत्रायं

पत्नी तद्धनं भुञ्जीतैव नतु तस्य दानाधमनविक्रयान् कर्तुमर्हति॥

तदाह कात्यायनः। अपुत्रा शयनं भर्त्तुः पालयन्ती गुरौ स्थिता। भुञ्जीतामरणात्क्षान्ता दायादा ऊर्द्ध्वमाप्नुयुः । गुरौ स्थितेति श्वशुरादौ भर्तृकुले स्थिता। यावज्जीवं तद्धनं भुञ्जीत न तु स्त्रीधनवत् स्वाच्छन्द्यं दानाधमनविक्रयानपि तस्यान्तु मृतायां पत्न्यभावे या दुहितरोऽधिकारिण्यः ताग्टह्णीयुः न तु भ्रातयः॥ तेषां दुहित्रादिभ्योजघन्यत्वात्तद्धाधकत्वानुपपत्तेः॥

तथा दानधर्म्मौ॥ स्त्रीणां स्वपतिदायस्तु उपभोगफलः स्मृतः। नापहारं स्त्रियः कुर्य्युः पतिदायात्कथञ्चन । उपभोगोहि न सूक्ष्मवस्त्रपरीधाना

दिना किन्तु स्वशरीरधारणेन पत्युपकारात्तद्भोगा नुज्ञातं। एवञ्च भर्त्तुरौर्द्ध्वदेहिकक्रियार्थं दानादिकमप्यनुमतं। अतएव नापहारं स्त्रियः कुर्य्युरित्यादिष्वपहारवचनं अपहारश्च धनस्वाम्यनुपयोगे भवति अतएव वर्त्तनाशक्तौ आधमनमप्यनुमतं तदशक्तौ विक्रयमपि। भर्त्तुरौर्द्ध्वदेहिकक्रियार्थमर्थानुरूपं भर्तृपितृव्यादिभ्योदद्यात्॥

तदाह वृहस्पतिः। पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान्। पूजयेत् कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः। पितृव्यपदं भर्तृसपिण्ड[illegible] दौहित्रपदं दुहितृसन्तानपरं स्वस्रीयपदं भर्तृस्वस्रीयसन्तानपरं मातुलपदञ्च भर्तृमातुलपरं तदेवमादिभ्योदद्यात् न पुनरेवमादिषु सत्स्वेव पितृकुलेभ्यः पितृव्यादिवचनानर्थक्यात् तदनुमत्या स्वपितृमातृकुलेभ्योऽपि दद्यात्॥

तदाह नारदः। मृते भर्त्तर्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः। विनियोगार्थरक्षासु भरणे च सईश्वरः परिक्षीणे पतिकुले निर्म्मनुष्ये निराश्रये। तत्सपिण्डेषु चासत्सु पितपक्षः प्रभुः स्मृतः। विनियोगे दानादौ।

पतिपुत्राभावे भर्तृकुलपारतन्त्र्यं तस्या इति दाय भागः। पत्नी चाधुना सवर्णैव कलावसवर्णाविवाह निषेधात् पत्न्यभावे दुहिता। अपुत्रस्य च स्वा कन्या धर्म्मजा पुत्रवद्धरेदित्यादिवचनात्। स्वा सवर्णा धर्म्मजा औरसी तत्रापि प्रथमं कुमारी॥

अपुत्रस्य मृतस्य कुमारी रिक्थं गृह्णीयात् तद भावे चोढेति पाराशरीयात्। तत्रायं विशेषः कन्या जा[व]गाधिकारा पश्चात् परिणीता सती अविद्यमान पुत्रा यदि म्रियेत तदा तत्पितृदाये सपुत्रायाः सम्भावितपुत्रायाश्च भगिन्याः तुल्योधिकारः नतु तद्भर्त्रादीनां। स्त्रीधनएव तेषामधिकारात् कुमार्य्य भावे चोढायाः पुत्रवत्याः सम्भावितपुत्रायाश्च तुल्योऽधिकारः तयोरेकतराभावे एकतराधि कारः उक्तपराशरवचनात्॥

सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता। कृता कृतावा पुत्रस्य पितुर्धनहरीतु सा इतिवचनात् स्वपुत्रद्वारेण पार्व्वणपिण्डदातृतया तयोरुपकारा विशेषाच्च। वन्ध्यापुत्रहीनविधवयोस्तु पुत्रद्वारेण पार्व्वणपिण्डदानोपकाराभावात् पुत्रवतीसम्भा

वितपुत्रयोरसत्वेऽपि नाधिकारइति दीक्षितमतं दायभागकृताप्याहतमिति बोध्यं । सर्व्वदुहितृभावे दौहित्रस्याधिकारः ॥

दौहित्रोह्यखिलं ऋक्थमपुत्रस्य पितुर्हरेत् । सएव दद्यात् द्वौ पिण्डौ पित्रे मातामहाय चेत्यादिवचनात् । पितुः मातुः पितुरित्यर्थः । अपुत्रस्येति दुहितृपर्य्यन्ताभावोपलक्षणं अन्यथा पत्नी दुहितरश्चैवेत्यादियाज्ञवल्क्यप्रभृतिविरोधः स्यात् अतएवोक्तवचनात् पुत्राभावएव दुहितृसत्वेऽपि दौहित्राधिकारइति गोविन्दराजमतमपास्तं । मैथिलास्तु पत्नी दुहितरश्चैव इत्यादिनानावचनबोध्याधिकारिणां सर्व्वेषां पश्चात् दौहित्राधिकारमाहुः तदसत् राज्ञोऽप्यधिकारितया परिगणितत्वात् तदभावस्य कदाप्यसम्भवात् फलतोदौहित्रस्याधिकाराभावएव पर्य्यवसाने दौहित्रस्याधिकारप्रतिपादकवचनानां निर्विषयत्वापत्तेः । दौहित्राभावेपितुरधिकारः ॥

विभक्ते संस्थिते वित्तं पुत्राभावे पिता हरेदिति कात्यायनीयात् । मृतभोग्यपिण्डद्वयदातृत्वेन

उपकारकत्वाच्च। श्रिकृष्णस्तु तदभावे मातृगामि तदभावे पितृगामि इति विष्णुवचने पाठं कल्पयित्वा पितुः पूर्व्वं मातुरधिकारमाह। तन्न तदभावे पितृगामि तदभावे मातृगामीति विपरीतपाठस्यैवाकरसिद्धत्वात् तथैव सर्व्वैर्निबन्धृभिर्लिखितत्वात् उक्तकात्यायनविरोधात्॥

वीजस्यैव च योन्याश्च वीजमुत्कृष्टमुच्यते इति मनुवचनावगतोत्कर्षेण च मातुः पूर्व्वं पितुरधिकारस्यैव शास्त्रार्थत्वाच्च पितुरधिकाराभावे मातुरधिकार उक्त विष्णुवचनात्॥

भार्य्यापुत्रविहीनस्य तनयस्य मृतस्य च माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञयेति वृहस्पतिवचनात् तद्भोग्यपित्रादिपिण्डत्रयदातृतद्भर्तृजननोपकारकत्वाच्च तदभावे सोदरस्याधिकारः तद्भोग्यपित्रादित्रयपिण्डदातृत्वात्। सोदराभावे सजातीयवैमात्रेयाणां तद्भोग्यपित्रादित्रयपिण्डदातृत्वात्। पितरौ भ्रातरस्तथेति याज्ञवल्क्यवचनात् एकपितृजातत्वेन विमातृपुत्राणामधिकारः। अत्र यदि सोदरासोदरौ भ्रातरौ असंसृष्टिनौ

स्यातां तदा सोदरस्य धनं सोदर एव गृह्णीयात् यथा सोदरस्य तु सोदरः इति वचनात् यत्र संसृष्ट्यसोदरोऽसंसृष्टिसोदरश्च तदा उभाभ्यामेव ग्रहीतव्य तदिति अन्योदर्य्यस्तु संसृष्टीति वचनात् यदा सोदरासोदरौ संसृष्टिनौ तदा संसृष्टी सोदर एव गृह्णीयात् तस्योभयधर्म्मवत्त्वात् संसृष्टिनस्तु संसृष्टीति वचनात्। एवमधिकारित्वं सोदरासोदरभ्रातृपुत्राणामपि तदभावे सोदरभ्रातृपुत्रस्याधिकारः नतु वैमात्रेयभ्रातृपुत्रस्य तद्दत्तधनिपितृपितामहपिण्डे धनिमातृपितामहीभोग्यत्वाभावेन सोदरभ्रातृपुत्रापेक्षया न्यूनोपकारकत्वात्। स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वधामयं पितामही च स्वेनैव स्वेनैव प्रपितामहीत्यादिषु पित्रादिपिण्डे पिण्डदातुर्मात्रादीनामेव भोगश्रुतेः संसर्ग्यसंसर्गिसोदरभ्रातृपुत्रेषु संसर्गिभ्रातृपुत्रस्याधिकारः। एवं संसर्ग्यसंसर्गिवैमात्रेयभ्रातृपुत्रेषु संसर्गिवैमात्रेयभ्रातृपुत्रस्याधिकारः यदात्वसंसर्गिसोदरभ्रातृपुत्रः संसर्गी चासोदरभ्रातृपुत्रः तदा तयोर्युगपदधिकारः। यदा पुनः सोदरवैमात्रेय

भ्रातृपुत्रौ संसर्गिणौ असंसर्गिणौ वा तदा उभ
यथैव सोदरभ्रातृपुत्रस्याधिकारः। भ्रातृपुत्रस्या
भावे भ्रातृपौत्रस्याधिकारः। धनिभोग्यपिण्डदा
तृत्वात् सपिण्डत्वाच्च भ्रातृप्रपौत्रास्तु नाधिका
रिणः धनिपितुः पञ्चमत्वेन उपकारकत्वाभावात्
अत्रापि सोदरवैमात्रेयभ्रातृपुत्रवत् क्रमोबोध्यः॥
भ्रातृपौत्रस्याभावे पितुर्दौहित्रस्याधिकारः धनि
पित्रादित्रयपिण्डदातृत्वात्। अत्र सोदरभगिनी
पुत्रवैमात्रेयभगिनीपुत्रयोस्तुल्यवदधिकार इत्या
चार्य्यचूडामणिः पितुर्दौहित्राभावे भ्रातृदौहित्रो
ऽधिकारी धनिभोग्यपितृपितामहपिण्डदातृत्वात्
तदभावे पितामहाधिकारः दौहित्रान्तस्वसन्ता
नाभावे पितुरधिकारवत् पितृदौहित्रान्ताभावे
पितामहस्य सांदृष्टिकन्यायसिद्धत्वात् धनिभोग्य
प्रपितामहपिण्डदातृत्वाच्च पितामहाभावे पिता
मह्या अधिकारः॥

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।
मातर्य्यपिच वृत्तायां पितुर्माता हरेद्धनं इतिमनु
वचनात्। यथा पित्रभावे माता तथापितामहा

भावेऽपि पितामहीति सांदृष्टिकन्यायेन पितामह्या
त्परं पितामह्यधिकारः ॥ पितामह्यभावे पितृव्यस्या
धिकारः धनिभोग्यपितामहप्रपितामहपिण्डदातृ
त्वात्। तदभावे पितृव्यपुत्रस्याधिकारः तस्यापि
धनिपितामहप्रपितामहपिण्डदातृत्वात् तदभावे
पितृव्यपौत्रस्याधिकारः तस्यापि धनिभोग्यपिता
महपिण्डदातृत्वात् पितृव्यपौत्राभावे पितामह
दौहित्रस्याधिकारः धनिभोग्यपितामहप्रपितामह
पिण्डदातृत्वात् यद्यपि धनिभोग्यपिण्डद्वयदा
तृत्वेन धनिभोग्यैकपिण्डदातुः पितृव्यपौत्रात्
उपकाराधिक्यं तथापि पितृव्यपौत्रस्याधिकारः
सपिण्डत्वेन बलवत्त्वात् पितामहदौहित्रस्याभावे
पितृव्यदौहित्रस्याधिकारः धनिभोग्यतत्पितामह
प्रपितामहपिण्डद्वयदातृत्वात् तत्प्रपितामहप्रपिता
मह्योः क्रमेणाधिकारः प्रपितामहपिण्डस्य धनि
भोग्यत्वात् पूर्व्वोक्तसांदृष्टिकन्यायसिद्धत्वाच्च। ततः
पितामहभ्राता अधिकारी तदभावे पितामहभ्रातृ
पुत्रः तदभावे पितामहभ्रातृपौत्रः तेषां धनिभोग्य
तत्प्रपितामहपिण्डदातृत्वात् ततः प्रपितामह

दौहित्रोऽधिकारी धनिभोग्यप्रपितामहपिण्डदातृत्वात् ततः पितामहभ्रातृदौहित्रोऽधिकारी धनिभोग्यप्रपितामहपिण्डदातृत्वात् तदभावे मातामहः तदभावे मातुलः तदभावे मातुलपुत्रः तदभावे मातुलपौत्रः॥

मनुना त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्॥ इत्याभ्यां वचनाभ्यां उपकारानन्तर्य्यक्रमेण धनाधिकारप्रतिपादकाभ्यां तेषामधिकारप्रतिपादनात् एतयोर्दायभागप्रकरणे कथनस्योपकारक्रमेण धनाधिकारज्ञापनैकप्रयोजनकत्वात् अन्यथा दायभागप्रकरणे तदुपादानवैयर्थ्यं। तदभावे मातामहदौहित्रोऽधिकारी तदभावे प्रमातामहः तदभावे प्रमातामहपुत्रः तदभावे प्रमातामहपौत्रः तदभावे प्रमातामहप्रपौत्रः तदभावे प्रमातामहदौहित्रोऽधिकारी तदभावे वृद्धप्रमातामहोऽधिकारी तदभावे वृद्धप्रमातामहपुत्रः तदभावे वृद्धप्रमातामहपौत्रः तदभावे वृद्धप्रमातामहप्रपौत्रः।

तदभावे वृद्धप्रमातामहदौहित्रोऽधिकारी। मृत धनिभोग्यपिण्डदात्रभावे सकुल्योऽधिकारी तद भावे सकुल्यः स्यादाचार्य्यः शिष्यएववेति मनुवच नात् सकुल्योद्विविधः अधस्तनऊर्द्धतनश्च अत्र प्रपौत्रपुत्रावधयोऽधस्तनास्त्रयोवृद्धप्रपितामहादि त्रयः पूर्व्वे ऊर्द्धतनाः तत्राप्यादावधस्तनानां सकुल्यानां क्रमेणाधिकारः तेषां मृतभोग्यपिण्ड लेपदातृत्वात् तेषामभावे ऊर्द्धतनानां त्रयाणां क्रमेणाधिकारः वृद्धप्रपितामहादित्रयपिण्डलेपस्य धनिभोग्यत्वात् तत्सन्ततीनाञ्च धनिदेयपिण्डले पभुग्भ्योवृद्धप्रपितामहादिभ्यः पिण्डदातृत्वात् ॥

वहवोज्ञातयोयत्र सकुल्याबान्धवास्तथा। योह्यासन्नतरस्तेषां सोऽनपत्यधनंहरेदिति वृहस्प तिवचनाच्च। आसन्नतरत्वञ्च उपकारतारतम्येन पूर्व्वोक्तवचनाभ्यामेकवाक्यत्वात् । एवम्विध सकुल्याभावे समानोदकाः सकुल्यपदेनोपात्ता मन्तव्याः तदभावे आचार्य्यः तदभावे शिष्यः आचार्य्यःशिष्यएवेति मनुना क्रमेण तयोरधिकार प्रतिपादनात् ॥

उपनीय ददद्वेदमाचार्य्यः सउदाहृतइत्यनेनोक्तः तदभावे सहवेदाध्यायिसब्रह्मचारिणः शिष्यः सब्रह्मचारिणइति याज्ञवल्क्यवचनात् तदभावे स्वग्रामस्थाः सगोत्रजाः तदभावे तथाविधाः समानप्रवराः ॥

पिण्डगोत्रार्षसम्बन्धाऋक्थं हरेयुरिति गौतमवचनात् उक्तपर्य्यन्ताभावे तद्ग्रामस्थाः त्रैविद्यादिगुणयुक्ताः ब्राह्मणाअधिकारिणः ॥

सर्व्वेषामप्यभावे तु ब्राह्मणाधनहारिणः। त्रैविद्याः शुचयोदान्ताः एवं धर्म्मोन हीयते इति मनुवचनात् एतेषामभावे ब्राह्मणधनवर्ज्जं राजगामीति ॥

तथा मनुः। अहार्य्यं ब्राह्मणधनं राज्ञा नित्यमिति स्थितिः। इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृप इति। ब्राह्मणधनस्य तु गुणवद्ब्राह्मणपर्य्यन्ताभावे ब्राह्मणस्य ग्रामान्तरस्थस्यापि अधिकारोन तु राज्ञ इत्यवधेयं। वानप्रस्थयतिब्रह्मचारिणां धनं धर्म्मभ्रातृसच्छिष्याचार्य्यागृह्णीयुः तदभावे चैकत्रवासी एकाश्रमी वा गृह्णीयात् ॥

तथाच याज्ञवल्क्यः।वानप्रस्थयतिब्रह्मचारिणां धनहारिणः। क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रात्रेक तीर्थिनः। क्रमेण प्रतिलोमेन तेन ब्रह्मचारिणोधने आचार्य्यः यतेर्धने सच्छिष्यः वानप्रस्थधने एक तीर्थवासिरूपएकाश्रमनिवासिरूपोवा धर्म्मभ्राता धिकारीत्यर्थः। ब्रह्मचारी च द्विविधः नैष्ठिकउप कुर्व्वाणश्च तत्र नैष्ठिकधने आचार्य्यस्याधिकारः पित्रादिपरित्यागेन यावज्जीवमाचार्य्यकुलवासनि ष्ठायाः कृतत्वात्। उपकुर्व्वाणस्य तु धनं पित्रादि भिरेव ग्राह्यं तस्य पाठार्थमेवाचार्य्यनिकटगत तया तादृशविरहादिति दायभागः॥ इति पुंधना धिकारिणः॥

॥ अथ स्त्रीधनाधिकारिक्रमः॥

तत्र कुमारीधने प्रथमं सोदरभ्राताधिकारी तदभावे माता तदभावे पिता॥

यत्कथं मृतायाः कन्यायाग्टह्णीयुः सोदराः स्वयं। तदभावे भवेन्मातुस्तदभावे भवेत्पितुरिति नारदी यात्। एतच्च कन्यायावरदत्तातिरिक्तविषयं वर दत्तधने वरोऽधिकारी॥

स्वञ्च शुल्कं वरोऽर्हतीयात् इति पैठीनसिवच नात्। अथागच्छेत्समूढायां दत्तं पूर्व्ववरोहरेत्। मृतायां पुनरादद्यात्परिशुद्धोभयव्ययं इति नार दीयाच्च॥

अथोढस्त्रीधनाधिकारक्रमनिरूपणार्थं तद्धनं निरूप्यते॥

तत्र नारदः। अध्यग्न्यध्यावाहनिकं भर्तृदाय स्तथैव च। भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतं। अत्र षट्सङ्ख्या न विवक्षिता स्त्रीधनस्य बहुविधस्य वक्ष्यमाणत्वात्॥

अध्यग्निधनमाह कात्यायनः। विवाहकाले यत् स्त्रीभ्योदीयते ह्यग्निसन्निधौ। तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितं। विवाहकालश्च वृद्धिश्राद्धादि पत्यभिवादनान्तः कालः तत्काललब्धमेव धनं यौतुकं युमिश्रणे इतिधात्वनुसारात् मिश्रता च स्त्रीपुंसयोरेकशरीररूपता यतोविवाहाद्भवति॥

तथाच श्रुतिः अस्थिभिरस्थीनि मांसैर्मांसं त्वचा त्वचमिति॥

तथाच व्यासः। विवाहकाले यत्किञ्चित् वरायोद्दिश्य दीयते। कन्यायास्तद्धनं सर्व्वमविभाज्यञ्च बन्धुभिः। उद्दिश्य कन्यायाइदं भवत्वित्युद्दिश्य वराय दीयते वरहस्ते समर्प्यते न त्वेतदभिसन्धिं विनापीत्यर्थः तेन पूर्व्ववचने अग्निसन्निधाविति अत्र च वचने विवाहकाले इतिद्वयमप्युपलक्षणं। यदा कदाचिदेव कन्यामुद्दिश्य वरहस्तसमर्पितस्यैव कन्याधनत्वात् अभिसन्धिमूलत्वादेव स्वामित्वस्य अतएव वरायेत्युपलक्षणं अन्यहस्तसमर्पणेऽपि नादृशाभिसन्धिसत्वे कन्यायाएव तद्धनमिति॥

अध्यावाहनिकमाह कात्यायनः। यत्पुनर्लभते नारी नीयमाना हि पैतृकात्। अध्यावाहनिकं नाम स्त्रीधनं परिकीर्त्तितं। पैतृकादित्येकशेषः तेन भर्तृगृहं नीयमाना पितृमातृकुलाद्यद्धनं लभते तदध्यावाहनिकमित्यर्थः भर्तृदायोभर्तृदत्तधनं॥

भर्तृदायं मृते पत्यौ विन्यसेत् स्त्री यथेष्टतः। विद्यमाने तु संरक्षेत् क्षपयेत्तत्कुलेऽन्यथा। इति वचनान्तरे कात्यायनेनैव दायपदस्य दत्ते प्रयुक्तत्वात् न चात्र दायपदं संक्रान्तधनपरमेवेति

वाच्यं विद्यमाने तु संरक्षेदित्युत्तरार्द्धासङ्गतेः पत्यौ जीवति स्त्रीसंक्रान्तभर्तृदायाप्रसक्तेः न तु मृत भर्तृसंक्रान्तधनपरं भर्तृदायपदं स्त्रीधनप्रकरणाख्यानात्। संक्रान्तधनस्य तु स्त्रीधनत्वाभावात् तथात्वे ददातेर्गौणत्वापत्तेश्च क्षपयेत् स्थापयेत् तत्कुले भर्तृकुले देवरादौ अन्यथा स्वयं रक्षणासामर्थ्ये॥

यथा याज्ञवल्क्यः। पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतं। आधिवेदनिकञ्चैव स्त्रीधनं परिकीर्त्तितं। द्वितीयविवाहार्थिना पूर्व्वस्त्रियै पारितोषिकं यद्धनं दत्तं तदाधिवेदनिकं अधिकस्त्रीलाभार्थत्वात्तस्य॥

तथा देवलः। वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं विदुः। भोक्त्री तत्स्वयमेवेदं पतिर्नार्हत्यनापदि॥ वृत्तिरन्नाच्छादनं॥

शुल्कमाह कात्यायनः। गृहोपस्करवाह्यानां दोह्याभरणकर्म्मिणां। मूल्यं लब्धन्तु यत्किञ्चित् शुल्कं तत्परिकीर्त्तितं। स्त्रिया गृहादिकर्म्मिरूपशिल्पिस्वभर्तृदारेणान्येषां गृहादिकर्म्मनिष्पादनात् उत्कोचविधया अन्येभ्योयद्धनं गृहीतं तच्छुल्कं

तदेव मूल्यं भर्तृप्रेरणार्थत्वात्। उपस्कारो मार्ज्जनी वाह्यावलीवर्द्दादयः दोह्याधेनवः लाभो निध्यादेः॥

तथाच विष्णुः। पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतं। आधिवेदनिकं बन्धुदत्तं शुल्कान्वाधेयकमिति स्त्रीधनं बन्धुपदेन मातुलाद्युपलक्षणं॥

अन्वाधेयकमाह देवलः। विवाहात्परतो यत्तु लब्धं भर्तृकुलात् स्त्रिया। अन्वाधेयं तदुक्तञ्च लब्धं बन्धुकुलात्तथा। ऊर्द्ध्वं लब्धन्तु यत्किञ्चित् संस्कारात्प्रीतितः स्त्रिया। भर्त्तुः सकाशात्पित्रोर्व्वा अन्वाधेयन्तु तद्भृगुः। बन्धुकुलादित्यत्र बन्धुपदेन मातापित्रोरुपलक्षणं तेन भर्तृद्वारेण सम्बन्धिनां श्वशुरादीनां मातापितृद्वारेण सम्बन्धिनां मातामहपितामहादीनाञ्च सकाशात् विवाहात्परतो यल्लब्धधनं तदन्वाधेयकमिति प्रथमवचनस्यार्थः विवाहात्परतो भर्त्तुः पित्रोर्व्वा सकाशात् यद्धनं लब्धं तदन्वाधेयकमिति द्वितीयवचनस्यार्थः। तदेवं नानामुनिभिर्नानाविधस्त्रीधनकीर्त्तनात् नारदवचने षट्सङ्ख्या नादृता किन्तु स्त्रीधनपराण्येव वचनानि संक्षेपतस्तु तदेव धनं स्त्रीधनं यद्धने भर्तृतः

स्वातन्त्र्येण* स्त्रियायथेष्टविनियोगार्हत्वं शास्त्र बोधितं भवति तच्च शास्त्रं ॥

कात्यायनः । प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः। भर्त्तुः स्वाम्यं भवेत्तत्र शेषन्तु स्त्रीधनं स्मृतं। ऊढया कन्यया वापि पत्युः पितृगृहेऽथवा भर्त्तुः सकाशात्पित्रोर्व्वा लब्धं सौदायिकं स्मृतं । सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते। यस्मात्तदानृशंस्यार्थं तैर्दत्तं तत्प्रजीवनं । सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितं। विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि । शेषपदार्थं विवृणोति। ऊढयेत्यादि अन्यतः भर्तृमातृपितृकुलव्यतिरिक्तात् यल्लब्धं शिल्पेन चित्रकर्म्मसूत्रकर्त्तनादिना च यदर्जितं तत्र भर्त्तुः स्वातन्त्र्यं अनापद्यपि भर्त्ता ग्रहीतुमर्हति तेन तदुभयधनस्य स्त्रीस्वामिकधनत्वेऽपि न तस्याः स्वातन्त्र्यविषयः किन्तु वचनबलात् भर्त्तुरेव स्वातन्त्र्यविषयः तथा च स्त्रिया तद्धननियोगे भर्त्रनुमत्यपेक्षेति स्त्रीधनं स्मृतमिति स्त्रिया यथेष्टविनियोगार्हं स्मृतं ऊढयेति ऊढया पत्युः कुलात् पित्रोर्व्वा कुलात् कन्यया च पित्रोः कुलात् यल्लब्धं तत्सौ

दायिकमित्यर्थः आनृशंस्यमनुकम्पा. स्थावरेष्व पीति भर्तृदत्तस्थावराति,रिक्तस्थावरपरं भर्तृदत्त स्थावरे स्त्रियादानविक्रयन्निषेधात्॥

तथाच नारदः। भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्। सा यथाकाममश्नीयात् दद्या द्वा स्थावरादृते। इत्यत्र भर्तृदत्तेति विशेषणात् पूर्व्वोक्तकात्यायनसामान्यवचनं भर्तृदत्तस्थावरा तिरिक्तस्थावरपरं सामान्यविशेषन्यायात्। भर्त्ता तु दुर्भिक्षादौ यदा स्त्रीधनं विना वर्त्तनाक्षमः तदा सौदायिकमपि स्त्रीधनं ग्रहीतुमर्हति॥

तदाह याज्ञवल्क्यः। दुर्भिक्षे धर्म्मकार्य्ये च व्याधौ संप्रतिरोधके। गृहीतं स्त्रीधनं भर्त्ता ना कामो दातुमर्हति। संप्रतिरोधके उत्तमर्णादिना स्वधनप्राप्त्यर्थं कृते स्नानभोजनादिप्रतिरोधे। उक्ते स्त्रीधने दुर्भिक्षाद्यापदं विना त्वधिकाराभावमाह कात्यायनः॥ न भर्त्ता नैव च सुतो न पिता भ्रातर स्तथा। आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः। यदि ह्येकतरोऽमीषां स्त्रीधनं भक्षयेद्बलात्। स वृद्धिं प्रतिदाप्यः स्यात् दण्डं चैव समाप्नुयात्। तदेव

यदनुज्ञाप्य भक्षयेत् प्रीतिपूर्व्वकं। मूलमेव तु दाप्यः स्यात् स यदा धनवान् भवेत्। अथ चेत् सद्दिभार्य्यः स्यात् न च तां भजते पुनः। प्रीत्या विसृष्टमपि तत् प्रतिदाप्यः स तद्बलात्। ग्रासाच्छादनवासा नामुच्छेदो यत्र योषितां। तत्र स्वमाददीत स्त्री विभागं ऋक्थिनस्तथा। सवृद्धिमिति बलाद्गृह्णीत स्त्रीधनरूपर्णमिति शेषः। अतोन स्त्रीधनविशेषणं सवृद्धिमिति तद्विशेषणत्वे सवृद्धीत्येव साधु स्यादिति। मूलमेवेत्येवकारेण वृद्धिव्यवच्छेदः। अथ चेदिति स्त्रियाधनं गृहीत्वा यद्यप्यपरभार्य्यया सह वसति ताञ्चावजानीते प्रीत्या गृहीतमपि स्त्रीधनं राज्ञा बलाद्दाप्यइत्यर्थः। ग्रासाच्छादनेति जीवनोपायि कमन्नवस्त्रादि यदि भर्त्ता न ददाति स्वयञ्च निर्द्दोषा तदा स्वयमाकृष्य स्त्रिया तद्ग्राह्यमित्यर्थः। वासोनिवासगृहं विभागमिति भर्त्तरि मृते तत्प्राप्ति योग्यांशं ऋक्थिनोदेवरादेः सकाशादाददीते त्यर्थः इत्यस्तु किं विस्तरेण प्रकृतमभिधीयते। तदेवं स्त्रीधने निरूपिते तस्यां मृतायां तद्धनाधिकारो

निरूप्यते। तत्र यौतुकधने प्रथमं कुमार्य्या अधिकारः॥

मातुस्तु यौतुकं यत् स्यात् कुमारीभाग एव स इति मनुवचनात् तदभावे वाग्दत्तायाः तदभावे चोढायाः पुत्रवत्याः सम्भावितपुत्रायास्तु युगपदधिकारः। स्त्रीधनं दुहितॄणां अप्रत्तानामप्रतिष्ठितानाञ्चेति गौतमवचनात् अत्र दुहितॄणामिति सामान्यतः सर्व्वदुहितॄणामधिकारप्राप्तौ अप्रत्तानामित्यादेः कुमार्य्यर्थत्वेनैव सार्थकतया प्रथममप्रत्ता कुमारी ततोऽप्रतिष्ठिता वाग्दत्ता तदभावे पुनरूढा पूर्व्वोक्ता तदभावे बन्ध्याविधवयोरपि तुल्यवदधिकार इति वचनार्थः। अत्र कुमारी वाग्दत्ता वा जाताधिकारा अनन्तरं परिणीता सती पश्चाद्बन्ध्यात्वेनावधृता पुत्रमनुत्पाद्यैव वा विधवा तदा तस्यां मृतायां तत्संक्रान्तमातृधने तद्भगिन्योः पुत्रवतीसंभावितपुत्रयोः तयोरभावे बन्ध्याविधवयोरप्यधिकारः न तु तद्भर्तुः भर्त्रधिकारस्य स्त्रीधनविषयत्वात् अस्य च सङ्क्रान्तधनत्वेन स्त्रीधनत्वाभावादिति बोध्यं बन्ध्याविधवयोः साक्षात्पुत्रद्वारे

णोपकाराभावेऽप्यूढानूढासामान्याधिकार प्रतिपादकगौतमवचनादेवाधिकारः । सर्व्वदुहित्रभावे पुत्रस्याधिकारः ॥

मातुर्दुहितरः शेषमृणात्ताभ्यऋतेऽन्वयइति याज्ञवल्कीयेन दुहित्रभावेऽन्वयपदेन पुत्राधिकारप्रतिपादनात् सर्व्वापेक्षया तस्यैवोपकारातिशयाच्च ॥

सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवतीति बौधायन वचनाच्च । पुत्राभावे दौहित्रोऽधिकारी पुत्राधिकारात्प्राक् दुहित्रधिकारश्रुतेः तद्वाधिकायाद्दुहितुः पुत्रेण बाध्यपुत्रबाधस्यैव न्याय्यत्वात् दौहित्राभावे पौत्रः तदभावे प्रपौत्रः उपकारतारतम्यात् तदभावे सपत्नीपुत्रः ॥

मातृस्वसा मातुलानी पितृव्यस्त्री पितृस्वसा । श्वश्रूः पूर्व्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः । यदासामौरसोन स्यात् सुतोदौहित्रएव वा । तत्सुतोवा धनं तासां स्वस्त्रीयाद्याः समाप्नुयुरिति बृहस्पति वचने सुतपदेन सपत्नीपुत्रस्याधिकारप्रतिपादनात् अन्यथा सुतपदस्यौरसविशेषणत्वे वैय

र्थ्यात् सपत्नीपुत्रसत्त्वे देवरस्याधिकारापत्तेश्च। तदभावे सपत्नीपौत्रः तदभावे सपत्नीप्रपौत्रः तयोः स्वभोग्यस्वभर्तृपिण्डदातृत्वात्। एतत्पर्य्यन्ताभावे ब्राह्मदैवार्षगान्धर्व्वप्राजापत्याख्यविवाहपञ्चकलब्धयौतुकधने भर्त्तुरधिकारः॥

ब्राह्मदैवार्षगान्धर्व्वप्राजापत्येषु यद्धनं। अतीतायामप्रजायां भर्त्तुरेव तदिष्यतइति मनुवचनात्। भर्तुरभावे भ्रातुः॥

बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च। अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः। इति याज्ञवल्क्यवचनात् अत्र बन्धुपदेन मातापित्रोरुपादानं अतएव बान्धवाभ्रातरः। पितृभ्यां चैव यद्दत्तं दुहितुः स्थावरं धनं। अप्रजायामतीतायां भ्रातृगामि तु सर्व्वदा। इति कात्यायनवचनैकवाक्यत्वात् अत्र स्थावरग्रहणात् दण्डापूपन्यायात् परधनस्यापि लाभइति दायभागः सर्व्वदापदेन ब्राह्माद्यष्टविधविवाहपरिग्रहः शुल्कं प्रागेवाभिहितं। अन्वाधेयकमप्यग्रे वाच्यं। तदभावे माताधिकारिणी तदभावे पिता॥

भगिनीशुल्कं सोदर्य्याणां ऊर्द्ध मातुः पितुः पूर्व्वन्त्वेके। इति कात्यायनवचनात् भगिनीशुल्कं भगिनीधनं प्रथमं सोदर्य्याणां तेषामभावे मातुः तदभावे पितुः पूर्व्वन्त्वेकइति परमतं। एतन्मते प्रथमं पितुस्ततोमातुरित्यर्थः। सपत्नीप्रपौत्रपर्य्यन्ताभावे पैशाचराक्षसासुराख्यविवाहत्रिकलब्धयौतुकधने प्रथमं मातुरधिकारः तदभावे पितुः॥

यत्तस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु। अप्रजायामतीतायां मातापित्रोस्तदिष्यते। इति मनुवचनात् अत्र मातापित्रोरित्यनेन तयोः क्रमप्रतिपादनात् युगपदधिकारे पित्रोरित्येव ब्रूयात् पितुरभावे भ्रातुः भ्रातुरभावे भर्त्तुः॥

बन्धुदत्तन्तु बन्धूनामभावे भर्तृगामि तदिति कात्यायनीयात्। बन्धुर्माता पिता च बन्धूनामभावे इत्यनेन भ्रातुरभावइत्यपि सूचितं भ्रातुरभावएव पित्रोरधिकारात् एतत्पर्य्यन्ताभावे तु यौतुकायौतुकसाधारणक्रमोऽग्रे वक्ष्यते॥

अथायौतुकस्त्रीधनाधिकारक्रमः॥ अत्र विवाहतत्पूर्व्वपरकालपितृदत्तयौतुकाभ्यामतिरिक्तस्त्रीधने कन्यापुत्रयोर्युगपदधिकारः॥

सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं स्त्रियां। अप्रजायां हरेद्भर्त्ता माता भ्राता पितापिवेति देवलवचनपूर्व्वार्द्धात् अत्र पुत्रकन्यानामिति द्वन्द्वनिर्देशात् सामान्यं साधारणमित्युक्तेश्च कन्यापुत्रयोर्युगपदधिकारसिद्धिः। तयोरेकतराभावेऽन्यतरस्य तद्धनं द्वयोरेव तयोरभावे ऊढायाः पुत्रवत्याः सम्भावितायाश्च तुल्यवदधिकारः॥

पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनादिति नारदवचनात् स्वपुत्रद्वारेण पार्व्वणे तद्भोग्यपतिपिण्डदातृत्वाच्च। एतयोरेकतराभावेऽन्यतरस्याः एतयोर्द्वयोरभावे पौत्रः पार्व्वणे तद्भोग्यपतिपिण्डदातृत्वात्। पौत्राभावे तु दौहित्रः पुत्रस्तोढा बाधकतया बाधकपुत्रेण बाध्यापुत्रबाधस्य न्याय्यत्वात्॥

दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवदिति मनुवचनाच्च दौहित्राधिकारप्रतिपादनात्। पौत्रवदित्यनेनासति बाधके पौत्रानन्तरं दौहित्राधिकारसिद्धेश्च। तदभावे प्रपौत्रः तदभावे सपत्नीपुत्रः तदभावे सपत्नीपौत्रः तदभावे सपत्नीप्रपौत्रो

अधिकारी एतेषां तद्भोग्यपतिपिण्डदातृत्वात् ततो बन्ध्याविधवा च तुल्यवदधिकारिण्यौ तयोरपि तत्प्रजात्वात् प्रजासामान्याभावएव भर्त्तुरधिकारात् ॥

अप्रजास्त्रीधनं भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपीति मनूक्तेः एतयोरेकतराभावे चान्यतरस्याः। बन्ध्याविधवापर्य्यन्ताभावे यौतुकधनवत् ब्राह्मादिविवाहपञ्चकविवाहितायाधने भर्तृभ्रातृमातृपितॄणां आसुरादित्रिकविवाहिताधने भ्रातृमातृपितृभर्तॄणां क्रमेणाधिकारः सादृष्टिकन्यायात्। एतत्पर्य्यन्ताभावे तु व्यवस्था वक्ष्यते। विवाहकाले तत्पूर्व्वापरकाले वा स्त्रियै यद्धनं पित्रा दत्तं तत्र तु धने प्रथमं कुमार्य्याः तदनन्तरं ऊढायाः पुत्रवतीसम्भावितपुत्रयोस्तदनन्तरञ्च बन्ध्याविधवयोश्चाधिकारः। सर्व्वदुहित्रभावे पुत्रादेर्यौतुकधनवत् क्रमेणाधिकारः॥

स्त्रियास्तु यद्धनं पित्रा दत्तं कथञ्चन। ब्राह्मणी तद्धरेत् कन्या तदपत्यस्य वा भवेदिति मनुवचनात्। अत्र पित्रा दत्तमिति विशेषणात्

विवाहसमयादन्यत्रापि यत् पितृदत्तं तत् प्रथमं कन्यायास्तदनन्तरं तदपत्यस्य पुत्रस्येत्यर्थः । ब्राह्मणीपदञ्चानुवादइति दायभागः । ततो ब्राह्मादिविवाहपञ्चकलब्धयौतुकधनेषु पितृपर्य्यन्ताभावे आसुरादिविवाहत्रिकलब्धयौतुकधनेषु भर्तृपर्य्यन्ताभावे अन्येषु च सर्व्वेषु स्त्रीधनेषु देवरादेरधिकारः देवरादीनामेव तदानीमधिकारस्य बृहस्पतिना प्रतिपादनात् ॥

तथाच बृहस्पतिः । मातृस्वसा मातुलानी पितृव्यस्त्री पितृस्वसा । श्वश्रूः पूर्व्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः । यदासामौरसो न स्यात् सुतो दौहित्रएव वा । तत्सुतोवा धनं तासां स्वस्रीयाद्याः समाप्नुयुः । अत्रौरसपदं कन्यापुत्रपरं सुतपदं सपत्नीपुत्रपरं नत्वौरसविशेषणं वैयर्थ्यात् । सपत्नीपुत्रसत्त्वे देवराद्यधिकारापत्तेश्च । तत्सुत इत्यत्र तत्पदेन पुत्रसपत्नीपुत्रयोरुपादानं नतु कन्यादौहित्रयोरपि कन्यापुत्रस्य दौहित्रपदेनोपात्तत्वात् दौहित्रपुत्रस्य तु पिण्डवद्भिर्भावेणोपकाराभावात् वाशब्देन च पुत्रसपत्नीपुत्रयोः पुत्राः

समुचिताः। एतद्वचनपाठक्रमस्तु नादरणीयः तदा सर्व्वशेषे देवराधिकारापत्तिः। नच तद्युक्तं तद्वचनोपात्तसर्व्वापेक्षया तस्यैवाधिकोपकारकत्वात्॥

त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। अनन्तरः सपिण्डाद्यः तस्य तस्य धनं भवेदित्येताभ्यां दायभागप्रकरणोक्तमनुवचनाभ्यामुपकारकत्वेनैव धनाधिकारप्रतिपादनात् अन्यथा दायभागप्रकरणे तदभिधानवैयर्थ्यापत्तिः। इत्यञ्चोपकारतारतम्येनाधिकारक्रमः। तथाच पाठक्रमाद्बलवदर्थक्रमएवादरणीयः तेन प्रथमं देवरस्याधिकारः तत्पितृपिण्डतद्भर्तृपिण्डतद्भर्तृदेयपुरुषत्रयपिण्डदातृत्वात् सपिण्डत्वाच्च। तदभावे देवरभ्रातृश्वशुरयोः सुतानां युगपदधिकारः तत्पिण्डतद्भर्तृपिण्डतद्भर्तृदेयपुरुषद्वयपिण्डदातृत्वात् सपिण्डत्वाच्च। तेषामभावे सपिण्डोऽपि भगिनीपुत्रः तत्पिण्डतत्पित्रादित्रयपिण्डदातृत्वात्। तदभावे भर्तृभागिनेयः तत्पिण्डतद्भर्तृपिण्डतद्भर्तृदेयपुरुषत्रयपिण्डदातृत्वात् तदभावे भ्रातृसुतः तत्पितृ

पितामह्योस्तस्याश्च पिण्डदातृत्वात् तदभावे श्वशुरयोः पिण्डदानाज्जामाताधिकारी। वचनन्तु एतेषामधिकारमात्रप्रतिपादकं नतु क्रमविधायकमिति । जामातृपर्य्यन्ताभावे सपिण्डानन्तर्य्यक्रमेण श्वशुरभ्रातृश्वशुरादीनां सपिण्डानामधिकारः सपिण्डाभावे सकुल्याः समानोदकाः समानप्रवराश्च पुम्वत् क्रमेणाधिकारिणः । एतत्सर्व्वाभावे ब्राह्मणीधने स्वग्रामश्रोत्रियैरधिकारः क्षत्रियादिस्त्रीधने तु राज्ञएवाधिकारः ॥ इति स्त्रीधनाधिकारक्रमः ॥

॥ अथ विभागानधिकारिणः कथ्यन्ते ॥
एतत्पर्य्युदासेनाधिकारिज्ञापनार्थं ॥

मनुः । अनंशौ क्लीवपतितौ जात्यन्धवधिरौ तथा। उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥

क्लीवमाह कात्यायनः । न मूत्रं फेणिलं यस्य विष्ठा चाप्सु निमज्जति। मेढ्रश्चोन्मादशुक्राभ्यां हीनं क्लीवः सउच्यते । जात्या स्वभावेन नत्वागन्तुकहेतोरन्धोवधिरश्चयः जन्मावध्यन्धवधिरावित्यर्थः।

नारदः। पितृद्विट् पतितः षण्डोयश्च स्यादौपपातिकः। औरसाअपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः। पितृद्विट् जीवति पितरि तत्ताडनकृत् मृते श्राद्धादिविमुखः। औपपातिकः उपपातकादिदोषैर्व्वान्धवैर्भिन्नोदकीकृतः॥

तथा याज्ञवल्क्यः। सर्व्वएव विकर्म्मस्थानार्हन्ति भ्रातरोधनं। विकर्म्मस्थाविरुद्धकर्म्मस्थाः पानद्यूताद्यासक्तादृश्रिावत्॥

मनुः। पतितैस्तत्सुतः क्लीवः पङ्गुरुन्मत्तकोजडः। अन्धोऽचिकित्स्यरोगार्त्तोभर्त्तव्यास्ते निरंशकाः। पङ्क्तिं न गच्छतीति पङ्गुः जडोवेदग्रहणासमर्थः। नारदः। दीर्घतीव्रामयग्रस्ताजडोन्मत्तान्धपङ्गवः। भर्त्तव्याः स्युः कुलस्यैते तत्पुत्रास्त्वंशभागिनः। दीर्घं जन्मादि तीव्रं कुष्ठादि तत्पुत्रानिर्दोषाअंशभागिनः भरणन्तु पतितवर्ज्जं॥

तेषां पतितवर्ज्येभ्योभक्तं वस्त्रं प्रदीयते इति नारदीयात् पतितपदेन तत्सुतस्याप्युपादानं पतितोत्पन्नत्वेन पतितत्वात्॥

व्यक्तमाह वौधायनः। अतीतव्यवहारान् ग्रासाच्छादनैर्विभृयुः अन्धजडक्लीवव्यसनिव्याधि

तादींश्चाकर्म्मिणः पतिततज्जातवर्ज्जमिति। एतेषां भार्य्याणामनधिकारमाह ॥

यथा अपुत्रायोषितश्चैषां भर्त्तव्याः साधुवृत्तयः। निर्व्वास्याव्यभिचारिण्यः प्रतिकूलास्तथैव च। सुता श्चैषां प्रभर्त्तव्यायावन्न भर्तृसात्कृताः ॥

---

## ॥ अथ विभाज्याविभाज्यनिर्णयः॥

तत्र विभाज्यमाह कात्यायनः। पैतामहञ्च पितृञ्च यच्चान्यत् स्वयमर्ज्जितं। दायादानां विभागे तु सर्व्वमेतद्विभज्यते। यच्चान्यदिति चकारः स्वयमित्यनेन सम्बध्यते तेन स्वयञ्चार्ज्जितमित्यभिधानात् चकारादन्यस्यापि तदर्ज्जनं साधारणधनद्वारेण व्यापारेण वा। अतएव साधारणोपघातेनार्ज्जित धनेऽर्ज्जकस्य भागद्वयं इतरेषामेकांशिकत्वमाह व्यासः। साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधं। शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः। तस्य भागद्वयं देयं शेषास्तु समभागिनः। तस्यार्ज्जकस्य युक्तञ्चैतत्। अर्ज्जकस्य साधारणधनद्वारेण शरीरायासेन च अनर्ज्जकानान्तु केवलसाधारणधन

द्वारेणार्ज्जितत्वात्। एवं यत्रैकेन शरीरव्यापार मात्रेण अपरेण च स्वधनशरीरायासाभ्यामर्जितं तत्र शरीरायासमात्रेणार्ज्जकस्य एकांशित्वं धन शरीरायासाभ्यामर्ज्जकस्य द्व्यंशित्वं न्यायसाम्यात्। एतेन पैतामहं पित्रर्ज्जितं साधारणधनोपघाते नार्ज्जितञ्च इति त्रिविधं धनं सर्व्वैरेव विभाज्यं। अन्यव्यापारेणार्ज्जितधनन्तु व्यापारिणैव सह विभाज्यमिति स्थितं। विद्योपाधिना लब्धधनन्तु साधारणधनोपघातेनार्ज्जितमपि समविद्याधि कविद्यैः सह विभाज्यं नतु न्यूनविद्याविद्यैः सह। नाविद्यानान्तु वैद्येन देयं विद्याधनं क्वचित्। सम विद्याधिकानान्तु देयं वैद्येन तद्धनमिति कात्या यनवचनात्॥

मध्यपठितविद्यापदं उभाभ्यां सम्बध्यते काकाक्षिन्यायात् तेन समविद्याधिकविद्याना मित्यर्थः। यदि विद्यार्ज्जनकाले तदीयकुटुम्बमप रोभ्राता स्वायासासाधारणधनेन विभर्त्ति तदा तद्विद्यार्ज्जितधने मूर्खस्याप्यपरस्य भ्रातुरंशित्वं। कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः। भागं विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन्निति॥

इति नारदवचनात्। अश्रुतोमूर्खोऽपि सन्। स्वकुलात् पित्रादितोलब्धविद्यार्जितधने तु सर्व्वेषामेव मूर्खामूर्खाणामंशित्वं॥

कुलोपार्ज्जितविद्यानां भ्रातृणां पितृतोऽपि वा। शौर्य्यप्राप्तन्तु यद्वित्तं तद्विभाज्यं बृहस्पतिरिति वचनात्॥

अपि वा शब्दाभ्यां पितामहपितृव्यादयः समुचिताः। शौर्य्यप्राप्तं साधारणधनोपघातेन शौर्य्यार्ज्जितधनविषयं। साधारणधनानुपघातार्ज्जितधनस्याविभाज्यतया वक्ष्यमाणत्वात् बृहस्पतिराहेतिशेषः। अत्र विद्याधनमाह॥

कात्यायनः। उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्व्वकं। विद्याधनन्तु तद्विद्यात् विभागे न प्रयुज्यते। शिष्यादार्त्विज्यतः प्रश्नात्सन्दिग्धप्रश्ननिर्णयात्। स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत्। विद्याधनन्तु तत्प्राहुर्विभागे न प्रयुज्यते। शिल्पेष्वपि हि धर्म्मोऽयं मूल्याद्यच्चाधिकं भवेत्। परं निरस्य यल्लब्धं विद्यया द्यूतपूर्व्वकं। विद्याधनन्तु तद्विद्यात् न विभाज्यं बृहस्पतिः। एषामर्थः यदि भवान् भङ्गमुपन्य

ष्यति तदा भवते मयैतावद्धनं देयमिति पणितं तत्र भङ्गोपन्यासेन यत्पणितं लब्धं तन्न विभाज्यं तथा शिष्यादध्यापितात् ऋत्विक्कर्म्मकरणेन यजमानाद्वा दक्षिणारूपं लब्धं यत्। यच्च यत्किञ्चित् विद्यायां प्रश्ने केनापि कृते तत्र सम्यगुत्तरेण परितोषाद पणितमेव किञ्चिद्धनं ददाति। तथा सन्दिग्धप्रश्न निर्णयात् सन्दिग्धार्थे निश्चयार्थं प्रश्ने कृते तन्निर्णय जननात् । योऽस्मिन् शास्त्रार्थे मम संशयमप नयति तस्मै सुवर्णादिकमिदं दास्यामीत्युक्ते तस्य संशयमपनीय यल्लब्धमित्यर्थः। अथवा वादिनोः कुत्रचिद्वादविषये सन्देहन्यायकरणार्थमागतयोः सम्यक् निरूपणेन यल्लब्धमित्यर्थः। तथा स्वज्ञान शंसनात् शास्त्रादिषु प्रकृष्टं स्वज्ञानं प्रकाश्य प्रति ग्रहादिना यल्लब्धमित्यर्थः। तथा वादात् वाद विचारे परं निर्जित्य यल्लब्धं तथा एकस्मिन्देये वस्तु नि बहूनां ब्राह्मणानां समुत्थाने येन प्रकृष्टं वेद मधीत्य यल्लब्धं। तथा शिल्पविद्यया चित्रकारसुवर्ण कारादिभिर्यल्लब्धं। तथा द्यूतेनापि परं निर्जित्य यल्लब्धं तत्सर्व्वं विद्याधनं अविभाज्यमितरैः सहेति॥

अत्रापि विशेषमाह कात्यायनः। परभक्तोपयोगेन विद्याप्राप्तान्यतस्तु या। तया लब्धं धनं यत्तु विद्यालब्धं तदुच्यते तेन पितृपितृव्याद्यतिरिक्ततः प्राप्तया यया कयाचिद्विद्यया साधारणधनोपघात मन्तरेण यदर्ज्जितं तत्समविद्यविद्याधिकैरेव विभाज्यं नतु न्यूनविद्याविद्यैरिति समुदायार्थ निष्कर्षः॥

---

॥ अथाविभाज्यं॥

तत्र नारदः। शौर्य्यभार्य्याधने हित्वा यच्च विद्याधनं भवेत्। त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः। अयमर्थः शौर्य्यधनं भार्य्याप्राप्तिनिमित्तं श्वशुरादितोलब्धं धनं विद्याधनं पित्रादितः प्रसादरूपेण यल्लब्धं धनं एतानि चत्वारि अविभाज्यानि यतोऽतस्तानि हित्वा अन्यद्विभजेदिति प्रक्रान्तेनान्वयः॥

तथा मनुः। विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत्। मैत्रमौद्वाहिकञ्चैव माधुपर्किकमेव च। मैत्रं मित्राल्लब्धं औद्वाहिकं जामातृतया श्वशुरा

दिभ्योलब्धं माधुपर्किकं आर्लिज्यलब्धं । तथा अनु
पघ्नन् पितृद्रव्यं श्रमेण यदुपार्ज्जितं स्वयमीहित
लब्धं तन्नाकामोदातुमर्हति ॥

तथा याज्ञवल्क्यः। क्रमादभ्यागतं द्रव्यं हृतम
भ्युद्धरेत्तु यः।दायादेभ्योन तद्दद्यादिद्यया लब्धमेव
च। क्रमादभ्यागतंद्रव्यं अन्येन हृतं यदि दाया
दानामनुमत्या तेषामेकतमः साधारणधनानुप
घातेन द्रव्यव्यापारनैरपेक्षेण च समुद्धरति तन्न
विभाज्यमितरैः॥

भूमौ तु विशेषमाह। पूर्व्वनष्टान्तु योभूमिमेक
एवोद्धरेत् श्रमात्। यथाभागं भजन्त्यन्ये दत्वांशन्तु
तुरीयकं। उद्धारकर्त्रे उद्धृतभूमेस्तुरीयांशं दत्वा
भागत्रयं तेन सह सर्व्वे स्वस्य योग्यांशक्रमेण
विभज्य स्वस्वांशं लभेरन्नित्यर्थः। तदेवमादि वचना
नामयं निष्कर्षः। विभक्तेन अविभक्तेनवा साधा
रणधनानुपघातेन अपरव्यापारनैरपेक्ष्येण च
यदर्ज्जितं तदर्ज्जकस्यैव तदविभाज्यमितरैः किन्तु
विद्याधनमात्रे विशेषः प्रागेवाभिहितः॥

तथान्यदप्यविभाज्यमाहतुः मनुविष्णू । वस्त्रं पत्रमलङ्कारः कृतान्नमुदकं स्त्रियः । योगक्षेमप्रचारश्च न विभाज्यं प्रचक्षते । वस्त्रमङ्गयोजितं पङ्क्तिपरिच्छेदार्थञ्च । पत्रं वाहनमश्वादि अलङ्कारो ऽङ्गुरीयादिः कृतान्नं लड्डुकादि उदकं कूपवाप्यादिगतं पित्रादिसम्बन्धिकूपादिजलं नान्यधनवत् विभाज्यं किन्तु स्वस्वव्ययानुसारेण गृहीतव्यं ॥

उद्धृत्यकूपवाप्यम्भस्त्वनुसारेण भुज्यत इति वृहस्पतिवचनात् ॥

योगक्षेमप्रचारः स्वस्वव्यवहारोपयुक्तशयनासनभोजनपात्रादिः ॥

तथाच व्यासः । अविभाज्यं सगोत्राणामासनं शयनादिकं । याज्यं क्षेत्रञ्च पात्रञ्च कृतान्नमुदकं स्त्रियः । याज्यं यागस्थानं देवप्रतिमा वा नतु याजनलब्धं तस्य विद्याधनत्वेन गतार्थत्वात् ॥

तथा कात्यायनः । योगप्रचारो रथ्या च वस्त्रं यच्चाङ्गयोजितं । प्रायोज्यं न विभज्येत शिल्पार्थञ्च वृहस्पतिः । प्रायोज्यं यद्यस्य प्रयोजनार्हं यथाऽश्रुतादौ पुस्तकादि न तन्मूर्खैर्विभजनीयमिति दाय

भागः। तथाच पुस्तकं मूर्खैर्न्न ग्राह्यं पण्डितानामेव नत् तदन्तर्गतस्वांशस्य तुल्यमूल्यद्रव्यान्तरं मूल्यमेव वा पण्डितात्तेन ग्राह्यं अन्यथा मूर्खस्य पुस्तकानधिकाराद्युपगमे यत्र पुस्तकमात्रं साधारणमस्ति तत्र विभागे मूर्खस्य भागलोपापत्तिः। न चेष्टापत्तिः। ये जाताये ऽप्यजाताश्च ये च गर्भे व्यवस्थिताः। वृत्तिं हि तेऽपि काङ्क्षन्ति वृत्तिलोपो न विद्यते इत्युक्तेन विरोधात्। नचतद्वचनस्य तदितरविषयत्वेन सङ्कोचः असङ्कोचेनैवोपपत्तौ सङ्कोचस्यान्यायसिद्धत्वात्। एवं शिल्पोपयुक्तं शिल्पिनामेव नाशिल्पिनां तत्रापीदृशी व्यवस्थेति॥

तथा शङ्खलिखितौ। नवास्तुविभागोनोदकपात्रालङ्कारोपयुक्तस्त्रीवाससामपांप्रचाररथ्यानां विभागस्येति बृहस्पतिः। पितरि जीवति यस्मिन् वास्तौ येन यत् गृहोद्यानादिकं कृतं तत्तस्याविभाज्यं पितुरप्रतिषेधेनानुमतत्वात्। एतच्चापरेणापिवास्त्वन्तरे तथाकरणे बोध्यं उपयुक्तं भोजनापात्रादि स्त्रियोदासीव्यतिरिक्ताइति॥

॥ अथ संसृष्टिभागार्थमादौ संसर्गो निरूप्यते ॥

तत्राह बृहस्पतिः। विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः। पितृव्येनाथ वा प्रीत्या स तु संसृष्ट उच्यते। तेन पित्रादिसह विभक्तः सन् पुनरन्योन्येच्छया पूर्व्वकृतं विभागमुपेक्ष्य यत्तव धनं तन्मम धनं तत्तवेति व्यवस्थया एकगृहित्वरूपतया व्यवस्थानं संसर्ग इति प्रपन्नं अत्र पित्रादिविशेषोपादानादेतेषामेव निरुक्तः संसर्गो भवति नत्वनुपात्तपितृव्यपुत्रादिभिरपि अन्यथा पित्रादिविशेषोपादानवैयर्थ्यादिति दायभागमतं॥ पित्रादिपदमुपलक्षणं येषामेवोत्पत्तितोऽविभक्तत्वं तेषामेव विभागानन्तरमेकत्रावस्थानं संसर्गः तेन पितृव्यपुत्रादिभिरपि संसर्गो भवतीति मैथिलमतं॥

---

॥ अथ संसृष्टिविभागः॥

तत्र संसृष्टभ्रातॄणां पुनर्विभागे ज्येष्ठस्य ज्येष्ठांशिता नास्ति किन्तु सवर्णभ्रातॄणां समांशितैव॥

तथा बृहस्पतिः। विभक्ता भ्रातरो ये च संप्रीत्यैकत्र संस्थिताः। पुनर्विभागकरणे तेषु ज्यैष्ठं न

विद्यते। इत्यत्र भ्रातॄणामन्येषाम्वा तुल्यसम्बन्धिनां संसर्ग्यसंसर्गिणां मध्ये संसर्गिणामेव प्रथमं मृत संसर्गिधनेऽधिकारः संसृष्टिनस्तु संसृष्टीति वक्ष्य माणवचनात् तदभावे तथाविधासंसर्गिणामिति क्रमः। एवं यदा पित्रा पुत्रान् विभज्य यथाशास्त्रं भागं गृहीत्वा पुत्रैः सहासंसृष्ट एव पुत्रान्तरमुत्पाद्य मृतस्तदा विभागानन्तरजात एव तत्पितृधनाधि कारी नतु पूर्व्वविभक्तोऽपीत्येवं पूर्व्वभ्रातृविभागे ऽपि विभक्तजस्य नांशित्वं॥

तथा वृहस्पतिः। पित्रा सह विभक्ता ये सापत्ना वा सहोदराः जघन्यजाश्च ये तत्र पितृभागहरा स्तु ते। अनीशः पूर्व्वजः पित्र्ये भ्रातुर्भागे विभक्तजः। परस्परमनीशास्ते मुक्ताशौचोदकक्रियाइति जघन्य जाविभागानन्तरजाताः यदि येन केनचित्पुत्रेण सह संसृष्टः सन् पिता मृतस्तदा तद्धनं संसृष्ट विभक्तजाभ्यां पुत्राभ्यां समं विभाज्यं॥

ऊर्द्धविभागाज्जातस्तु पित्र्यमेव हरेद्धनं। संसृष्टा स्तेन वा ये स्युर्विभजेत सतैः सहइतिवचनात् अत्र विशेषः। संसृष्टिनापि पित्रा स्वासाधारणशरीरा

यासाभ्यां यदर्जितं तत् विभक्तजस्यैव नतु सं सृष्टपुत्रान्तरस्यापि ॥

तथाच वृहस्पतिः । पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितं । विभक्तजस्य तत्सर्व्वमनोशाः पूर्व्वजाः स्मृताः । अत्र स्वयमित्यनेनासाधारणधनशरीरायासेनार्जनं दर्शयति। एवं विभक्तपित्रा यदृणादिकं स्वार्थमेव कृतं तद्विभक्तजेनैव समाधेयं। यथा धने तथर्णेऽपि दानाधानक्रयेषु च इति तद्वचनशेषात्।यदि पुनः संसृष्टेन सह साधारण्येन ऋणादिकं पित्रा कृतं तदुभाभ्यामेव संसृष्टविभक्तजाभ्यां समाधेयं । विभक्तजस्य विभागानन्तरं गर्भाधाने नोत्पन्नः गर्भाधानादृते जनकव्यापाराभावात्। अतोयद्यज्ञातगर्भायामेव स्त्रियां पुत्राविभक्ताः तदा तद्गर्भजातोविभक्तेभ्यएव भ्रातृभ्यः पूर्व्वविभक्तद्रव्याण्येकीकृत्य पुनर्विभाज्य स्वांशं गृह्णीयात् नतु विभक्तजेन सह पितृद्रव्येऽप्यंशित्वं एतच्च विभक्तजस्य पितृधनाधिकारित्वं पितुः स्वार्ज्जितधनविषयं पैतामहधनस्य तु मातुर्विमातुश्च रजोनिवृत्तिमन्तरेण विभागाभावात् । भ्रान्त्या कृतस्य

तस्याशास्त्रीयत्वेनानुपादेयत्वात् तत्र विभक्तजा विभक्तजानां सर्व्वेषामेवांशित्वात्। अतएव यदि दैवात् पैतामहमपि भूम्यादिकं विभाज्य यथा शास्त्रं स्वयमंशद्वयं गृहीत्वा पिता पृथक्स्थितस्त दापि पितामहसम्बन्धिधनविभागं भ्रात्रादिभ्योविभ क्तजोऽपि गृह्णीयात् पूर्व्वविभागस्याशास्त्रीयत्वेन निवर्त्यत्वात्। तथात्रैव विषये विष्णुः ॥

पितृवि[illegible]क्ताविभागानन्तरोत्पन्नस्य भागं दद्यु रिति ॥

---

॥ अथ पितृकृतविभागोनिरूप्यते ॥

तत्र पित्रा कृतविभागः पितृकृतविभागः। तत्र स्वोपार्ज्जिते धने पितुरिच्छैव नियामिका पिता महधने तु मातृरजोनिवृत्तिसहकृता तदिच्छा नियामिका इति विशेषः ॥

पिता चेत्पुत्रान् विभजेत्तस्य स्वेच्छा स्वयमुपा त्तेऽर्थे इति विष्णुवचनात् पितामहधनविषये ऊर्द्ध्वं पितुः पुत्राऋक्थं विभजेरन् मातुर्निवृत्ते रजसि जीवति चेच्छतीति गौतमवचनात्। नच

गौतमवचनं पितुः स्वोपात्तधनविषयमेव किन्न स्यादिति वाच्यं पितुः स्वोपार्ज्जितधने रजो निवृत्त्यन्तरमेव विभागाभ्युपगमे ऊर्द्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनमित्यस्य निर्विषयत्वापत्तेः रजो निवृत्तौ पुत्रोत्पत्त्यभावात् नचैतस्यैव पितामहधन गोचरत्वं अतो न निर्विषयत्वमिति वाच्यं तथात्वे पितामहधने विभक्तजस्य निरंशतया तस्य वृत्ति लोपापत्तेः वृत्तिलोपस्य च ये जाता येऽप्यजातास्च इति वचनेन निषेधात्। नच पितृगृहीतपितामहद्रव्यएव पित्रनन्तरं विभक्तजस्याधिकारान्न वृत्तिलोपइति वाच्यं पित्रा सकलतद्धनस्य भुक्तत्वे वृत्तिलोपस्यावश्यकत्वात्। वस्तुतः पिता चेत्पुत्रान् विभजेत् तस्य स्वेच्छा स्वयमुपात्तेऽर्थे इति विष्णु वचनेन पितुः स्वार्जिते इच्छामात्रस्य प्रयोजकत्वात् तदनुरोधेन मातृरजोनिवृत्तेः सहकारित्वाभिधायकं गौतमवचनं पितामहधनविषयमेवेति तत्त्वं। तत्र पितुः स्वोपात्तधनविभागे यावदेव स्वयं ग्रहीतुमिच्छति तावदेव गृहीत्वान्यत्पुत्रेभ्योविभजेत् लिखितविष्णुवचनात्॥

जीवन्नेव वा विभज्य वनमाश्रयेत् वृद्धाश्रमं वा गच्छेत् स्वल्पेन वा विभज्य भूयिष्ठमादाय वसेत् यद्यु पदध्येत् पुनस्तेभ्योगृह्णीयादिति हारीतवचनाच्च॥

वृद्धाश्रमं प्रव्रज्या उपदध्येत् भुक्ताशेषधनः स्यात्। यदि तु कस्मैचित्पुत्राय गुणवत्तया भक्तत्वेन वह्नपोष्यत्वेनाक्षमत्वेन वा निमित्तेन अधिकं ददा ति तदा सोऽपि शास्त्रार्थः॥

पित्रैव तु विभक्ताये समन्यूनाधिकैर्धनैः। तेषां सएव धर्म्मः स्यात् सर्व्वस्य हि पिता प्रभुरिति नारद वचनात् प्रभुः स्वेच्छया यथेष्टविनियोगार्हः तेनैत द्वचनं स्वार्जितविषयं पितामहधने निरुक्तप्रभुत्वा सम्भवात्। उक्तान्यनिमित्तं विना तु व्याध्याद्याकुल चित्ततया कस्मिंश्चित् पुत्रे क्रोधेन वा सुभगापुत्र स्नेहेन वा न्यूनाधिकदाने न पितुः प्रभुत्वं॥

व्याधितः कुपितश्चैव विषयासक्तचेतनः। अयथा शास्त्रकारी च न विभागे पिता प्रभुरिति नारदी यात् विषयासक्तत्वं सुभगापुत्रत्वादिना। पितृ कृतपितामहधनविभागे तु पिता स्वयमंशद्वयं गृहीत्वा पुत्रेभ्यएकैकांशं दद्यात्॥

जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वयमिति पितामहधनगोचरवृहस्पतिवचनात् ॥

पितृधनगोचरत्वञ्चास्य नाशङ्कनीयं तत्र स्वेच्छामात्राधीनग्रहणप्रतिपादकविष्ण्वादिविरोधात् इच्छया न्यूनाधिकग्रहणस्यापि सम्भवात् भागद्वयमात्रग्रहणानुपपत्तेश्च । पूर्व्वोक्तगुणवत्त्वादिनिमित्तेनापि पितामहधनस्य भूमिनिबन्धद्विपदान्यतमरूपस्य न्यूनाधिकदाने पितुर्न्न प्रभुत्वं ॥

भूर्य्या पितामहोपात्ता निबन्धोद्रव्यमेव वा ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोरिति पितुः स्वाच्छन्द्यनिवृत्तिपरयाज्ञवल्क्यवचनात् ॥

सति पितामहधनस्वामिनि पितरि तत्पुत्राणां पितामहधनस्वामित्वाप्रसक्तेर्यथाश्रुतार्थवाधात् । भूम्यादित्रितयातिरिक्ते मणिमुक्तादौ तु पैतामहे पितुः स्वार्ज्जितवत् स्वाच्छन्द्यमेव ॥

मणिमुक्ताप्रवालानां सर्व्वस्यैव पिता प्रभुः ।
स्थावरस्य तु सर्व्वस्य न पिता न पितामह इति याज्ञवल्कीयात् । अत्र मणिमुक्ताप्रवालानामित्युपादाय पुनः सर्व्वस्येत्युपादानं भूम्यादित्रितयभिन्न

यावत्सुवर्णादिद्रव्यसंग्रहणार्थं द्वितीयार्द्धं सर्व्वस्येत्युपादानात् सर्व्वस्य कुटुम्बवर्त्तनाविरोधेन स्थावरादेर्न दानादिनिषेधः इति दायभागः। एवं पित्रा स्वार्ज्जितधनात् पैतामहाद्वा विंशोद्धारोऽपि ज्येष्ठायेच्छया दातव्यः॥

विभागश्चेत् पिता कुर्य्यात् स्वेच्छया विभजेत्सुतान्। ज्येष्ठम्वा श्रेष्ठभागेन सर्व्वे वा स्युः समांशिन इति याज्ञवल्कीयात् अत्र पूर्व्वार्द्धं स्वार्ज्जितविषयं परार्द्धं पितामहधनगोचरमिति दायभागः तथा पित्रा स्वार्जितधनविभागे पुत्रहीनपत्न्यै पुत्रतुल्यांशो देयः॥

असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्त्तिता इति व्यासवचनात्। पितुरिति कर्त्तरि षष्ठी पुत्रकर्तृकभागे विमातुरंशाभावस्य च वक्ष्यमाणत्वात्। समानांशदानमपि भर्त्रादितः स्त्रीधनादाने॥

यथा याज्ञवल्क्यः। यदि कुर्य्यात्समानांशान् पत्न्यः कार्य्याः समांशिकाः। न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वेति। याभ्यः स्त्रीधनंदत्तं तत्समानधनवत्योऽपुत्राः पत्न्यः पित्रा कार्य्या इत्यर्थः ताहशस्त्री

धनाभावे तु पुत्रसमांशिकाः कार्य्या इत्यर्थः पुत्रेभ्यः समांशदाने इयं व्यवस्था पुत्रेभ्योऽन्यूनदाने स्वय मधिकग्रहणे तु स्वांशात्समांशिकाः कार्य्याः । मिश्र सम्मतमप्येतत् स्त्रीधनदाने त्वर्द्धदानं । अधिवि न्नस्त्रियै प्राप्तधनायै आधिवेदनिकस्यार्द्धदानदर्श नात् सांदृष्टिकन्यायेन ॥

तथा याज्ञवल्क्यः । अधिविन्नस्त्रियै देयमाधि वेदनिकं समं । न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकी र्त्तितं ॥ इति द्वितीयविवाहार्थिना प्रथमस्त्रियै पारि तोषिकं यद्धनं दीयते तदाधिवेदनिकं अधिक विवाहार्थत्वात्तस्य तच्च द्वितीयस्त्रियै यावद्दीयते तत्समं देयमित्यर्थः दायभागेऽप्येवं । मिश्रास्तु स्त्री धनदाने नार्द्धदानं वचनाभावादिति वदन्ति । शूद्रस्य दासीपुत्रोऽपि पितुरिच्छया परिणीत स्त्रीजातपुत्रेण सह तुल्याधिकारी मृते तु पितरि तदर्द्धांशाधिकारी । तथाविधभ्रातृभावे दौहित्रे चासति पितुः सर्व्वधनाधिकारी सति तु दौहित्रे तेन सह तुल्याधिकारीत्याह याज्ञवल्क्यः ॥

जातोऽपि दास्यां शूद्रेण कामतोऽंशहरो भवेत् ।

मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिनं । अभ्रातृकोहरेत् सर्व्वं दुहितॄणां सुतादृते । कामतः पितुरिच्छातः दुहितॄणां सुतादृतइति एवञ्च सति दौहित्रेण सह समभागित्वमस्य । समं स्यादश्रुतत्वाद्विशेषस्येति न्यायात् एवमेव दायभागः ॥

---

॥ अथ मृते पितरि भ्रातॄणां विभागः ॥

सोऽपि पितृमरणानन्तरं भ्रातॄणां सत्यपि धनस्वामित्व मातरि जीवन्त्यां न धर्म्म्यः ॥

ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समं। भजेरन् पैतृकं ऋक्थमनीशास्ते हि जीवतोरिति मनुना मातुरूर्द्धस्योक्तत्वात् । यदि तु जीवन्त्यां मातरि विभागं कुर्व्वन्ति तदा मातापि स्वपुत्रतुल्यांशहारिणी ॥

समांशहारिणी माता पुत्राणां स्यान्मृते पतौ इति वचनात् । अत्र मातृपदस्य जननीपरत्वात् विमातुर्नांशिता किन्तु ग्रासाच्छादनादिना भर्त्तव्येति एवं पितामहधने पौत्रैर्व्विभज्यमाने पितामह्यपि पौत्रतुल्यांशभागिनी ॥

पितामह्यश्च सर्व्वास्तामातृतुल्याः प्रकीर्त्तिता इत्यत्र मातृतुल्याइत्यनेन यथा स्वपुत्त्रकृतस्व भर्तृधनविभागे मातुः पुत्त्रतुल्यांशित्वं तथा पिता महधने पौत्त्रैर्व्विभज्यमाने पितामह्याअपि पौत्त्र तुल्यांशित्वमिति प्रतिपादनात् । अत्रापि पिता महीसपत्नीनां नांशित्वं किन्तु भर्त्तव्यमात्त्रं पूर्व्वोक्त न्यायेन पितामहीपदस्यापि पितृजननीमात्त्रवाच कत्वादिति सम्प्रदायः । वस्तुतस्तु पितामह्यश्च सर्व्वास्तामातृतुल्याः प्रकीर्त्तिताइत्यत्र सर्व्वापदो पादानात् वज्ञवचनाच्च पितामहीसपत्नीनामपि तत्त्वांशित्वमिति युक्तं । मैथिलास्तु समांशहारिणी मातापुत्त्राणां स्यान्मृते पताविल्यत्र मातृपदं विमा तृपरमपि वृहस्पतिवचनैकवाक्यत्वात् ॥

तथाच वृहस्पतिः । तदभावेतु जननी तनयांश समांशिनी । समांशामातरस्तेषां तुरीयांशास्तु कन्यकाइति । अस्यार्थः । तदभावे पितुरभावे अर्थात् पुत्त्रैर्व्विभागे क्रियमाणे जननी पुत्त्रवती मातरोऽपुत्त्रा विमातरः एताः सर्व्वाः स्वपुत्त्रतुल्यांश भागिन्यः एषां भागिनां भगिन्यस्त्वविवाहिता

विवाहार्थं स्वस्वभ्रात्रंशतुरीयांशभाजः विवाहो चितधनभागिन्योभवन्तीति वदन्ति। एतन्मतानु साराच्च पितामहीसपत्नीनामपि स्वभर्तृधनेऽंशि त्वं युक्तमेवेति बोध्यं। अत्र सवर्णभ्रातृणां विभाग उद्धारपूर्व्वकः समएववेति द्विविधः ॥

द्विप्रकारोविभागस्तु दायादानां प्रकीर्त्तितः। वयोज्येष्ठक्रमेणैकः समापरांशकल्पनेति मनुवच नात् वयोज्येष्ठेत्युद्धारं दर्शयति। नच केवलसम भागस्यापि शास्त्रीयत्वे तस्यैव नित्यवदनुष्ठाने प्राप्ते सोद्धारविधेरननुष्ठानलक्षणाप्रामाण्यापत्तिरिति वाच्यं भक्त्यतिशयादिना भ्रातृणामिच्छया सोद्धा रविभागस्यापि सम्भवात्। इदानीञ्च भ्रातृणां भक्त्य तिशयाभावात् उद्धारार्हज्येष्ठाभावाच्च लोके सम भागएव दृश्यते। ज्येष्ठत्वञ्च मातृतः सजातीय विमातृतोवा जातानां सर्व्वेषां भ्रातॄणां अग्रजा तत्वं। सदृशस्त्रीषु जातानां पुत्त्राणामविशेसतः। न तेषां मातृतोज्यैष्ठं जन्मतोज्यैष्ठमुच्यतइतिमनु वचनात्। सदृशस्त्रीषु सवर्णासु। पुत्त्रिकौरस

योस्तु समांशित्वमेव नतु पुत्रिकायाः प्राक्तनत्वेऽपि ज्येष्ठांशित्वं ॥

पुत्रिकायां कृतायां तु यदि पुत्रोनुजायते। सम स्तत्र विभागःस्यात् ज्येष्ठता नास्ति हि स्त्रियाइति मनुवचनात् । विंशोद्धारश्चासोदरभ्रातृविभाग एव सोदरमात्रभ्रातृविभागेतु ज्येष्ठस्य द्व्यंशित्वं । तथाच बृहस्पतिः ॥ समवर्णासु ये जाताः सर्व्वे पुत्राद्दिजन्मनां उद्धारं ज्यायसे दत्वा भजेरन्नितरे सममिति। समवर्णासु बह्वीषु स्त्रीष्वित्यर्थः॥ अत्र समवर्णानांस्त्रीजातानामुद्धारोक्तेः । एकाधिकं हरेज्ज्येष्ठइतिमनुना द्व्यंशीवा पूर्व्वजः स्यादिति गौत मेन च यत् ज्येष्ठस्य द्व्यंशित्वमुक्तं तत्सोदरमात्र विभागएव पर्य्यवस्यति। सामान्यविशेषन्यायात्॥ अत्र सवर्णास्वित्यभिधानात् विषमवर्णजातानां ब्राह्मणादिपुत्राणां यथाक्रमं चतुस्त्रीद्व्येकांशित्वं॥

तथामनुः चतुरोंशान् हरेद्विप्रस्त्रीनंशान् क्षत्रियासुतः॥ वैश्यासुतोहरेत् द्व्यंशमंशं शूद्रासुतो हरेदिति शूद्रस्यापि पुत्रत्वार्थं जन्मदापूजारूप देवकृत्यस्याभ्युदयिकादिरूपपितृकृत्यस्य कर्त्तव्य

त्वात्। मनुवचनेऽपि द्विजन्मनामित्युपलक्षणं॥ तेन शूद्रस्यापि विंशोद्धारादिकमस्त्येव पुन्नामनरकत्राणादिरूपोपकारस्याधिकलाभहेतोरविशेषात्। अतएव शूद्रैव भार्य्या शूद्रस्य नान्याभार्य्योपदिश्यते। तस्यां जाताः समांशाः स्युर्यदि पुत्त्रशतं भवेदिति मनुना शूद्रस्यासवर्णाभार्य्याविरहेण वर्णवैषम्यप्रयुक्तविषमभागनिवृत्तिरेवोक्ता॥ नतु विंशोद्धारादिनिवृत्तिरपीतियुक्तमुत्पश्यामः। औरसेन तु दत्तकादीनां विभागे औरसस्य द्व्यंशित्वं सवर्णदत्तकादेरेकांशित्वं हीनवर्णदत्तकादेस्तुनांशित्वं किन्तु ग्रासाच्छादनमात्रं॥

तथाच नारदः॥ सर्व्वे ह्यनौरसस्यैते पुत्त्रा दायहराः स्मृताः। औरसे पुनरुत्पन्ने तेषु ज्यैष्ठं नविद्यते। तेषां सवर्णा ये पुत्रास्तेतृतीयांशभागिनः। हीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः। दायहराः पितुः कृत्स्नांशहराः। तेषां मध्ये ये सवर्णाः पुत्त्राइत्यर्थः विभागस्तु धनिनः पित्रादेर्ऋणं परिशोध्य तदवशिष्टधनस्य करणीयः। उत्तमर्णेच्छया विभज्य वा तदृणं परिशोधनीयं॥

तथाच नारदः। यच्छिष्टं पितृदायेभ्योदत्वर्णं पैतृकं ततः। भ्रातृभिस्तद्विभक्तव्यमृणी नस्याद्यथा पिता। अत्र ऋणी नस्याद्यथापितेत्यनेन विभागानन्तरमपि ऋणपरिशोधनं दर्शितं। अन्यथा तद्व्यर्थं स्यादिति। एवमेकेन भ्रात्रादिना वहूपेक्षतया यत्राधिकं भुक्तं तत्र भुक्तांशोविभागमध्ये न प्रवेशनीयः। किन्तु भुक्तावशिष्टस्य विद्यमानस्यैव धनस्य विभागः कार्य्यः॥

बन्धूनामविभक्तानां भोगं नैव प्रदापयेत् दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् इति नारदवचनात् दृश्याद्वेति वाशब्द एवार्थे तेनाविभक्ततादशायां यावद्धनमुपचितं यावच्च व्ययितं तत्सर्व्वं बुद्धा यद्दृश्यं विद्यमानं तस्मादेव विभागः कार्य्यइत्यर्थः। असंस्कृतभ्रातृभगिनीनां पैतृकधनेन संस्कार्य्यतामाह व्यासः। असंस्कृतास्तु ये तत्र पैतृकादेव तद्धनात्। संस्कार्य्याभ्रातृभिर्ज्येष्ठैः कन्यकास्च यथाविधीति। पितृधनाभावे स्वधनेनापि तैरवश्यं संस्कार्य्याः॥

अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः।

अवश्यकार्य्याः संस्काराभ्रातृभिः पूर्व्वसंस्कृतैरिति नारदवचनात् अथ विभागकाले केनचित् भागिना निह्नुतस्य पश्चात् प्राप्तस्य विभागः ॥

तत्र मनुः । ऋणे धनेच सर्व्वस्मिन् प्रविभक्ते यथाविधि । पश्चात् दृश्येत यत्किञ्चित् तत्सर्व्वं समतां नयेत् । पूर्व्वं यस्य यथा भागकल्पना कृता तत् समानैवापहर्त्ता स्वयापह्नुतद्रव्यस्य तथासा कार्य्या नपुनरस्यापह्नोतृतयाऽल्पभागोदातव्यः न दातव्यएववेति समतां नयेदित्यस्यार्थः । विंशोद्धारादिबाधे हेत्वभावात् ब्राह्मणक्षत्रियादि पुत्राणां समभागापत्तेश्च ॥

तथाकात्यायनः ॥ अन्योन्यापहृतं द्रव्यं दुर्व्विभक्तञ्च यद्भवेत् । पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः पश्चात्प्राप्तमित्यनेनापहृतद्रव्यस्यैव विभागोनतु पुनर्विभक्तस्यापि पुनर्विभाग इति दर्शितं । दुर्व्विभक्तमित्यनेन भ्रमादिना कृताशास्त्रीयविभागधनस्य पुनः शास्त्रीयविभागः कार्य्यइत्यर्थः । सकृदंशोनिपततीतिच शास्त्रीयविभागानन्तरं पुनस्तद्विभागइत्येतत्परं अतोनिह्नुतस्य द्रव्यस्य निह्नो·

ना सह यथोक्तभागःकार्य्यइति स्थितं अथ विदेश गतस्य पुनरागतस्य विभागः॥

तत्र वृहस्पतिः। कृतेऽकृतेविभागेवा ऋक्थी यत्र प्रवर्त्तते। सामान्यन्तु भवेद्यत्तु तत्र भागहरस्तु सः। ऋक्थी दायादः सामान्यं साधारणं। तथा ऋणं लेख्यं गृहं क्षेत्रं यस्य पैतामहं भवेत्। चिरकालप्रोषितोपि भागभागागतस्तुसः। नकेवलं सएव भागभाक् अपितु सप्तमपुरुषपर्य्यन्तं तत्सन्ततयोपि भागभाजइत्याह सएव॥

गोत्रसाधारणं त्यक्ता योन्यदेशं समाश्रितः। तद्वंशस्यागतस्यांशः प्रदातव्योनसंशयः। तृतीयः पञ्चमोवापि सप्तमोवापि योभवेत्। जन्मनामपरिज्ञाने लभेतांशं क्रमागतं। यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः। तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही। मौलाआत्मीयाः सामन्ताः प्रतिवासिनः। महीति साधारणधनमात्रोपलक्षणं तेनाविभक्ततादशायां देशान्तरगतस्य चिरकालानन्तरं समागतस्य तत्सप्तमपर्य्यन्तसन्ततेरपि मौलसामन्तादिद्वारा स्वज्ञानपूर्व्वकं क्रमागत

धनात् यथाशास्त्रमंशित्वमितिस्थितं ॥ एषा च व्यवस्था विदेशगतविषयिन्येव देशस्थविशयेतु धनिनश्चतुर्थपुरुषपर्य्यन्तएव तद्धनभागार्हता पञ्चमादेः पार्व्वणपिण्डदातृत्वाभावेनानुपकारकत्वादिति प्रागेवोक्तं ॥ एकमातृकयोर्विभिन्नपितृकयोर्विभागमाह विष्णुः॥ एका माता द्वयोर्यत्र पितरौ द्वौ च कुत्र चित् । तयोर्यद्यस्य पित्र्यं स्यात् स तद्गृह्णीत नेतरः । यस्यहि वीजाद्योजातः स तद्धनं गृह्णीयात् न इतरोऽन्यवीजजोगृह्णीयादित्यर्थः । तेन नात्र समांशितादि व्यवस्थेति एवं यथाविधपुत्राभ्यां मातृधनविभागेऽपि यस्य पित्रा यद्धनं तस्मै दत्तं तेनैव तद्ग्राह्यं नेतरेण॥

द्वौ सुतौ विवदेयातां द्वाभ्यां जातौ स्त्रियाधने। तयोर्यद्यस्य पित्र्यं स्यात् स तद्गृह्णीत नेतरः। इति वचनात् मात्रा स्वयमर्ज्जिते तुल्यांशित्वमेव॥ अथ साधारणस्यैकेन देयादेयविचारः ॥ अत्र केचित् साधारणमेकेनादेयमेव ।

सामान्यं पुत्रकन्याधिसर्व्वस्वं न्यासयाचितं । अदेयान्याहुराचार्य्याः यच्चान्यस्मै प्रतिश्रुतमितिमनुवचने

सामान्यस्य साधारणस्यादेयत्वप्रतिपादनात् ॥

अतएव स्थावरस्य समस्तस्य गोत्रसाधारणस्य च। नैकः कुर्य्यात् क्रयं दानं परस्परमतं विना॥ विभक्ता अविभक्ता वा सपिण्डाः स्थावरे समाः। एको ह्यनीशः सर्व्वत्र दानाधमनविक्रये ॥ इति व्यासवचनाभ्यामेकस्य दानाद्यनीशत्वमाहुःएतेषां सामान्यस्वत्ववादित्वात् सर्व्वधनएव सर्व्वेषां स्वत्वसत्त्वात् । एकेच्छया कृतदानविक्रया द्यसिद्धमित्याशयः। तदसत् । सामान्यस्वत्वस्य दायभागकृतैव प्रमाणाभावेन-निरंशितत्वात् । अतएव दायभागकृतैव तद्व्यासवचन विलिख्य तद्व्यासवचनादेकस्य दानविक्रयाद्यनधिकारइति पूर्व्वपक्षयित्वा यथेष्टविनियोगार्हत्वलक्षणस्य स्वत्व स्य द्रव्यान्तरवदत्राप्यविशेषात् । वचनन्तु स्वामित्वेन दुर्वृत्तपुरुषविक्रये कुटुम्बविरोधादध र्म्मभागिताज्ञापनार्थं निषेधरूपं नतु विक्रया द्यनिष्पत्त्यर्थमिति समाहितं । अत्र च द्रव्या न्तरवदित्यस्य साधारणद्रव्यान्तरवदत्रापि साधा रणस्थावरादावप्यविशेषात् स्वामित्वाविशेषादि

त्वर्थः। सामान्यस्वत्वाभावेन साधारणत्वस्य नाना स्वामिकत्वरूपस्यालीकतया साधारणत्वमविभक्त त्वमेव तत्र च साधारणे स्वत्वस्य विभागात् प्रागेव जातत्वेन तदानीमपि स्वांशदानादौ बाधकाभावइति प्रादेशिकस्वत्ववादिनो दायभा गकर्त्तुराशयः ॥

अतएव यद्येकजातावहवः पृथग्धर्म्माः पृथक्क्रियाः। पृथक्कर्म्मगुणोपेतानचेत् कार्य्येषु सम्मताः। "स्वभागान् यदि दद्युस्ते विक्रीणी युरथापिवा। कुर्य्युर्यथेष्टं तत्सर्व्वमीशास्ते स्वधनस्य वै इति नारदवचने एकेन क्रियमाणकार्य्येषु अन्ये षामसम्मतत्वेऽपि स्वभागदानादावीशत्वमुक्तं ॥ नच विभक्तविषयमेतदिति वाच्यं। तत्रान्येषा मस्वामित्वनिश्चयेन तत्सम्मतेरजागलस्तनन्याय मानत्वात्। इत्थञ्च पूर्व्वलिखितमनुवचने यत्सा मान्यस्यादेयमध्ये गणनं तन्निषेधपरमेव नतु दानाद्यनिष्पत्तिपरमिति। एवमेव स्मृतिसारप्रभृ तयः। एतेन विभक्ताविभक्तसाधरणस्वांशदानं सिध्यत्येवेति सिद्धं ॥

एवं स्वामिनोवैदेश्यादौ तत्कुटुम्बभरणार्थं दासेनापि यदृणादिकं कृतं तत्सर्व्वं स्वामिना समाधेयं ॥

तथाच कुटुम्बार्थे ह्यधीनोऽपि व्यवहारं यमाचरेत्। स्वदेशे वा विदेशे वा तत् ज्यायान्न विचालयेत्। अधीनोऽपि दासोपि व्यवहारं ऋणादिकं। अथदासानिरूप्यन्ते तेच पञ्चदशप्रभेदाः॥

॥ तथाच नारदः॥

गृहजातस्तथा क्रीतोलब्धोदायादुपागतः। अन्नाकालभृतस्तद्वदाहितः स्वामिना च यः। मोक्षितोमहतश्चर्णात् युद्धे प्राप्तः पणे जितः। तवाहमित्युपगतः प्रव्रज्यावसितः कृतः। भक्तदासश्च विज्ञेय तथैव वडवाकृतः। विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः। गृहजातोदास्यामुत्पन्नः दायादागतः क्रमागतः। अन्नाकालभृतः दुर्भिक्षोपाधिना स्वामिना आहितः बन्धकीकृतः। मोक्षितइति ऋणमोचनेनाङ्गीकृतदास्यइत्यर्थः तवाहमिति कस्याप्यदासः सन् स्वयं दासत्वेन दत्तरूपः। प्रव्रज्यावसितः सन्यासभ्रष्टः कृतः केनचिन्निमित्ते

नैव तत्कालपर्य्यन्तं तवाहं दासइति समयः। भक्तदासः सुभिक्षेऽपि भक्तेनाङ्गीकृतदास्यः। वडवा दासी तल्लोभादङ्गीकृतदास्यः॥

तथाच वृहस्पतिः। योभुङ्क्ते परदासीन्तु स ज्ञेयो वडवाकृतः। कर्म्म तत्स्वामिनः कुर्य्यात् यथान्येन भृतोनरः। तत्स्वामिनोदासीस्वामिनः॥

प्रव्रज्यावसिते नारदः। राज्ञएव तु दासः स्यात् प्रव्रज्यावसितोनरः। न तस्य हि विमोक्षोऽस्ति न विशुद्धिः कथञ्च न। एवञ्च राज्ञोदासत्वं प्रव्रज्यावसितयोः क्षत्रियवैश्ययोरेव ब्राह्मणस्य तथाविधस्य निर्वासनमेव दासत्वं॥

तथाच कात्यायनः। प्रव्रज्यावसिता यत्र त्रयोवर्णा द्विजातयः। निर्व्वासं कारयेद्विप्रं दासत्वं क्षत्रवि नृपः। क्षत्रविडिति समाहारद्वन्द्वः द्वितीयैकवच नान्तश्चेत्कारयेदित्यस्य कर्म्म। एतेषां मध्ये तु गृह जातादिचतुर्णां आत्मविक्रेतुश्च स्वामिप्रसादं विना न दास्यमोक्षः। अन्नाकालभृतस्तु दुर्भिक्षे यद्भ क्षितं तद्गोयुगस्वहितं दत्वा मुच्येत भक्तदासोभक्त त्यागात् वडवाकृतस्तु वडवात्यागान्मुच्येत।

आहितस्य स्वामिना कृतोद्धारे उत्तमर्णदास्यान्मोचनं । एवमेषां मध्ये यः स्वामिनं प्राणसंशयात् महासंकटाद्वा मोक्षयेत् स दास्यान्मुच्येत ॥

कात्यायनः दासेनोढा त्वदासी या सापि दासीत्वमाप्नुयात्। यस्मात्तद्भर्त्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः। अत्र दासीपदस्य सम्बन्धिकतया तदुपस्थापितस्वामिनएव दासी। सा च द्विविधा कस्यापि न दासीअन्यदासी च। तत्र पूर्व्वा दासोढत्वमात्रेणैव दासेश्वरस्य दासी। परा च तत्प्रभोरनुमतिसहकारेणानुमता च न दासी। एवं तुल्यन्यायेन कस्याप्यदासो यदि दासीं परिणयति तदा परिणेता दासीश्वरस्य दासोभवति। अन्यदासश्चेत् परिणेता दासेश्वरस्यानुमत्या दासीश्वरस्य दासः। एवञ्च यद्यननुमत्या दासेन दासीपरिणेता तदा स्वस्वस्वामिनोरेव दासदास्यौ तयोरपत्यन्तु द्वाभ्यामेव स्वामिभ्यां विभजनीयं॥

नच ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति। क्षेत्रिकस्यैव तद्बीजं नवप्ता फलमर्हति। एष धर्म्मोगवाश्वस्य दास्युष्ट्राजाविकस्यच । विहङ्गमहिषी

णाञ्च विज्ञेयः प्रसवं प्रति। इति मनुवचनाद्दा
सीश्वरस्यैव तदपत्यमिति वाच्यं। तत्र दासीपदस्य
परोढादासीपरत्वात् स्वयमूढायान्तु दास्यां तथावि
धापत्यस्य विभाज्यत्वमेवेति स्मार्त्तमतमप्येतदिति

श्रीकृष्णतर्कालङ्कारभट्टाचार्य्यविरचितो
दायाधिकारक्रमसंग्रहः समाप्तः॥